# पाश्चात्यकाव्यशास्त्रम्

★

ज्ञानचन्द्र शास्त्री
आचार्यः, एम. ए. (द्वय)
साहित्य विभागाध्यक्षः



★

जयभारत साधु महाविद्यालय
हरिद्वारम् (उ० प्र०)

# पाश्चात्यकाव्यशास्त्रम्



ज्ञानचन्द्र शास्त्री
आचार्यः, एम. ए. (द्वय)
साहित्य विभागाध्यक्षः



जयभारत साधु महाविद्यालय
हरिद्वारम् (उ० प्र०)

पुस्तक प्राप्ति स्थानम्ः—

प्रकाशकः—

संजीवकुमारः

जयभारत साधु महाविद्यालय

हरिद्वार–उ० प्र०





प्रथम संस्करणम्—१९९२

मूल्यम्—२०·००

मुद्रकः—

प्रिय प्रिंटिंग प्रेस

आरोग्य भवन

सिंह द्वार, कनख

# अभ्यर्थना

पाश्चात्यविचारकैर्यथा भारतीयसंस्कृतवाङ्मयस्य वेदोपनिषत्साहित्यकाव्यशास्त्राणामांग्ल भाषायाँ सदुपयोगः कृतस्तथा पाश्चात्य ज्ञानविज्ञानस्य समुन्मेषः संस्कृतभाषायामल्पीयानेवावलोक्यते । भरतभामहरुद्रटवामनानन्दवर्धनाभिनवगुप्त कुन्तक क्षेमेन्द्रादीनां काव्यशास्त्राचार्याणां रसालंकाररीति-ध्वनिवक्रोक्त्यौचित्यसंप्रदायाः यथा काव्यस्याभ्यान्त-रिकात्मतत्वमन्वेषयन्ति तथा पाश्चात्यकाव्यशास्त्र-विचारकाः काव्यस्यात्मतत्वं न विश्लेषयन्ति । पाश्चात्यकाव्यशास्त्रस्य मूलाधारो भौतिकवाद एव प्रतिष्ठितो वर्तते तत्र काव्यस्य वहिरङ्गपक्षे महा-नादरो दरीदृश्यते । भारतीयपाश्चात्यकाव्यशास्त्रयो-स्तुलनात्मकविश्लेषणाय संस्कृतभाषामाध्यमेन पाश्चात्य काव्यशास्त्रस्य प्रमुखानामाचार्यप्रवराणां सिद्धान्ता; विचाराः, विविधवादाः, तेषां काव्यलक्षणप्रयोजनहेतु

वर्गीकरणत्रासदीकामदीत्यादि विषया: परिचयात्मक रूपेणात्र मया विवेचिता: ।

नवीनतमेनानेन मदीय प्रयासेन यदिच्छात्राणां हितं विदुषां च किंचिदपि मनोह्लादकरं तत्वं समुद् भवेत् तदैवायं प्रयास: सफलतामेष्यतीति मे निश्चय: । आंग्लहिन्दीभाषयार्येषां विविध - पाश्चात्य - काव्य-शास्त्रिणां विचारसारमादाय मया विवेचनं विहितम् तेषामाधमर्ण्यमङ्गीकृत्य निवेदयामि यदत्र प्रकाशने मुद्रणालयस्य प्रमादान्मदीयाल्पज्ञतया च ये दोषा: संजातास्तदर्थं क्षन्तव्योऽहं विद्वद्वरेण्यै: ।

ग्रन्थस्यास्य 'प्ररोचना' च शुभाशंसनम् 'प्रकुर्वतामाचार्य-प्रवराणां गुरुकुलकांगड़ी-विश्वविदयालय-हरिद्वारस्य प्राध्यापकानां श्रीमतीं वेदप्रकाश शास्त्रिवर्याणां-तथा च श्री देवनारायण त्रिपाठीमहाभागानां जय-भारत साधु महाविद्यालयस्य व्याकरण विभागाध्यक्षाणाम् भिनन्दनं करोमि यत्तैरहं भूयो भूय: संप्रेरित: ।

ज्ञानचन्द शास्त्री

# सम्मतिः

हरिद्वारस्थजयभारतसाधुमहाविद्यालयस्य साहित्यविभागाध्यक्ष पदमलङ्कुर्वद्भिर्भारतीयपाश्चात्योभयविधकाव्यतत्त्वावगाहनचणैः तत्र भवद्भिः श्रीमद्भिः श्रीज्ञानचन्द्रशास्त्रिमहाभागैः प्रणीतः "पाश्चात्यकाव्यशास्त्रम्" इत्याख्यो ग्रन्थो मया पर्यालोचनदृशा अवलोकितः। ग्रन्थोऽयं पारम्परिकसंस्कृतशिक्षाध्यापनपद्धत्याऽध्यापनेऽहर्निशं सलग्नानामध्यापकानामध्ययनतत्पराणामध्येतॄणाञ्च कृते परमोपादेयत्वं नितान्तमभिनवत्वं हितसाधकत्वञ्च भजत इत्यत्र नास्ति सन्देहकणिकावकाशलेशः।

भारतीय काव्यशास्त्रस्यैतिहासिकपर्यालोचनया सर्वैरप्यस्माभिरवगम्यते यन्नाटयशास्त्रप्रणेतुः महामुनिभरताचार्यादारभ्याद्यावधि भारतीयकाव्यशास्त्रे सूक्ष्मेक्षिकया नानाविधानि तत्वानि समुपबृंहितानि सिद्धान्ताश्च पूर्वपक्षोन्तरपक्षस्थापनखण्डनमण्डनपुरस्सरं प्रतिपादिताः दृष्टिपथमवतरन्तीति।

हन्त ! पाश्चात्य काव्यशास्त्रमधिकृत्याधुना संस्कृतभाषायामुपनिबद्धो नैकोऽपि ग्रन्थोऽस्माभिरक्षिलक्ष्यीकर्तुं शक्यते, तत्रायं महतः प्रमोदस्य विषयः यत् शास्त्रिमहाभागैः "पाश्चात्यकाव्यशास्त्रम्" इति पाश्चात्यज्ञान-विज्ञानसम्पन्नस्य महत्व-

पूर्णग्रन्थस्य प्रणयनेन नितान्तं स्तुत्यं श्लाघनीयञ्च कार्यं समुपपादीति नूनं ते सर्वथाऽभिनन्दनीयाः धन्यवादार्हाश्चेति निर्विवादम् ।

इदन्तावत्सर्वथाऽवधेयं यद् भारते पाश्चात्यकाव्यशास्त्रमधिकृत्य हिन्दीभाषायामाङ्लभाषायां तत्तत् क्षेत्रीयभाषायाञ्च नानाविधाश्शोधप्रबन्धाः गवेषणात्मकनिबन्धाश्च समुल्लिखिताः दृश्यन्ते, परञ्च संस्कृतभाषायां पाश्चात्यकाव्यतत्वचिन्तनधिया परमप्रामाणिकैरप्याचार्यैः स्वल्पीयानप्यायासः न कृतः । उत्तरप्रदेशे सम्पूर्णानन्दसंस्कृतविश्वविद्यालयेन सम्बद्धेषु पारम्परिक संस्कृतविद्यालयेषु महाविद्यालयेषु च काव्यशास्त्रस्य या काचिदप्यध्ययनाध्यापनव्यवस्था निर्धारित-पाठ्यक्रमसरणिश्च विद्यते तत्र सर्वेऽपि ग्रन्थाः संस्कृतभाषायामेव समुपनिबद्धाः दृश्यन्ते, अस्माद्धेतोः पारम्परिक संस्कृतविद्यालयेषु काव्यशास्त्रस्य नितान्तमेकांगी बोधो भवति । आधुनिके वैज्ञानिके युगे यदि यदि पारम्परिकसंस्कृताध्येतारः केवलं भारतीयकाव्यशास्त्रीयविचारेभ्यः सुविज्ञाः मर्मज्ञाः पाण्डिताश्च भवेयुर्नाम अथ च पाश्चात्य देशेषु काव्यशास्त्रस्य का चिन्तनसरणिः, का च काव्यानुभवप्रक्रिया, किम्वा काव्यस्य स्वरूपमिति विषयेभ्यः सर्वथाऽनाभिज्ञाः असम्बद्धाश्च भयेयुः तदा पारम्परिकसंस्कृताध्ययनस्य सर्वाङ्गपूर्णता खपुष्पायितेति निर्विवादम् ।

एवम्बिधा पारम्परिकसंस्कृताध्यापनपद्धतिः न खलु आधुनिकस्य युगस्याकांक्षायाः अपेक्षायाश्च सम्पूर्त्यर्थं समर्थेति नास्ति मनागपि सन्देहः। तत्र खलु काव्यशास्त्रस्य भारतीयपाश्चात्योभयविधज्ञानविज्ञानयोः सम्यगज्ञानार्थं सम्पूर्णानन्द-संस्कृत विश्वविद्यालयस्य शास्त्रिपरीक्षायाः तृतीयवर्षस्य पाठ्यक्रमे "पाश्चात्यकाव्यशास्त्रम्" इति विषयः वर्षेऽस्मिन्निर्धारितः, किन्तु एतदर्थं सर्वेऽपि शास्त्रिपरीक्षायामध्ययनतत्पराः अध्येतारः सर्वतोभावेन चिन्ताकुलाः दृश्यन्ते। श्री शास्त्रिणा पाश्चात्यकाव्यशास्त्रमिति ग्रन्थे पाश्चात्यकाव्य-शास्त्रस्य विकासक्रमस्योपन्यासः विमर्शश्चास्मिन्ग्रन्थे गम्भीर चिन्तनपूर्णक्रमबद्धविचारः समुपस्थापितः। प्लेटो, अरस्तू, लौंजाइनस, प्रभृतीनां यूनानदेशीय काव्यशास्त्रिणां विचाराः महता श्रमेणोपस्थापिताः, ततश्च 'होरेश' प्रभृतीनां रोमन-देशीयकाव्यशास्त्रिणामौचित्यविषयकाः सिद्धान्ताः विमृष्टाः। नैतेनालम् 'जान ड्राइडन', 'डा. जानसन' प्रभृतीनामभिनव-काव्यशास्त्रसमीक्षकाणां विचाराः पाण्डित्य – पुरस्सरं समुपबृंहिता।

किम्बहुना 'विलियमवर्डसबर्थ', 'कालरिज' प्रभृतीनां रोमानीसमीक्षकाणामपि महनीयाः विचाराः उपन्यस्ताः। अथ च मैत्थू आर्नाल्ड, आई.ए.रिचर्ड्स, टी.एस.इलियट, फ्रायड,

मार्क्स, पोप प्रभृतीनां सर्वथाधुनिकसमीक्षकाणामपि काव्यशास्त्रीयचिन्तनधारायाः महता गम्भीरचिन्तनेन सुस्पष्टाः विचाराः समीक्षिताः। ग्रन्थस्यान्ते पाश्चात्य काव्यशास्त्रीय तत्वचिन्तनविधौ यथार्थवादः, अभिव्यँजनावादः, नव्यशास्त्रवाद स्वच्छन्दतावादः, प्रतीकवादश्चेति नानाविधाः वादाः साधुध्वनिताः।

अनेनेदं सुतरामाभाति यत् संस्कृतभाषायाः माध्यमेन पाश्चात्यकाव्यशास्त्रस्यायं ग्रन्थः सर्वथा लोकोत्तरः शास्त्रिपक्षायाः अध्यापने तत्पराणामध्येतृणांच कृते ग्रन्थोऽयं महानुपकारकः सहायकश्चेति सर्वथानिर्विवादमिति। एतदर्थं भूयोभूयः पण्डित श्री ज्ञानचन्द्र शास्त्रिणः नूनं धन्यवादार्हाः।

—डा० उमाशंकर मिश्रः
उपशिक्षानिदेशक (संस्कृत)
शिक्षा निदेशालय, उत्तर प्रदेश, इलाहाबाद

---

परमसम्माननीयैर्मिश्रमहाभागैः पाश्चात्य काव्यशास्त्रमिदं सूक्ष्मेक्षिकया संपरीक्ष्य संस्तुत्यानया विदुषां पुरः समुपस्थापनोयं कृतं तदर्थं ते शतशो धन्यवादार्हास्सन्ति—

ज्ञानचन्द्र शास्त्री

# प्ररोचना

हरिद्वारस्थ - जयभारत - साधु - स्नातकोत्तर संस्कृत महाविद्यालय हरिद्वारस्थ साहित्यविभागाध्यक्ष पदमलङ्कुर्वाणैराचार्यप्रवरैः श्री ज्ञानचन्द्र शास्त्रि-महाभागैर्गीर्वाणवाचा विरचितः प्रथमोऽयं ग्रन्थो विराजते संस्कृतजगति। यस्मिन पाश्चात्यकाव्यशास्त्रा-चार्याणां सर्वे विचारा यथायथं संग्रथिता विभान्ति। विदुषा लेखकेन भारतीयकाव्यशास्त्रमिव पाश्चात्य काव्यशास्त्रमपि पर्यालोचनपुरःसरं समधिगत्य ग्रन्थो निरमायि। अत्र ग्रन्थप्रणेत्रा परां मतिमास्थाय प्राक्-कालिकानां यूनानी काव्यशास्त्रिणां प्लेटो अरस्तू प्रभृतीनां काव्यसिद्धाताः सम्यग् वर्णिताः, रोमनकाव्य-शास्त्रिणां सिद्धान्ताः यथावस्थानं विवेचिताः। आधु-निकानां पाश्चात्यकाव्यशास्त्रचिन्तकानाञ्च सिद्धान्ताः सूक्ष्मेक्षिकया यथास्थानं प्रदर्शिताः।

इतः प्राक् पाश्चात्य काव्यशास्त्रिणां विचारा

आंग्लभाषायामेवासन्। अथ सम्प्रति हिन्दी भाषाया-मपि प्रकाशिताः प्रायशो विलोक्यन्ते, परं संस्कृत भाषायामद्यापि सर्वथाऽभाव एवानुभूयते विदुषालेखके नामुमभावमेवापाकर्तुं पाश्चात्यकाव्यसिद्धान्तानां संस्कृत भाषयोपनिबंधनं विधाय नूनमेवाकारि विद्वज्ज-नाह्लादकारि ऋष्यर्चनम्। ग्रन्थोऽयं पाश्चात्यकाव्य-तत्वान्यधिजिगांसूनां छात्राणां यथोपकारकरस्तथा विदुषामपि विचारोन्मेषकरो भविष्यतीति मम द्रढीयान् प्रत्ययः। विद्वत्प्रवराणाँ 'पाश्चात्यकाव्य शास्त्रम्' ग्रन्थस्य प्रणेतृणां श्रीमतामाचार्य ज्ञानचन्द्र शास्त्रिमहाभागानां यशसो वैशद्यम्; आयुषोदैर्ध्यम् कीर्तेर्वैमल्यं, विद्वज्जनानुरागिताञ्च कामये।

विदुषां विधेयः—

आचार्य वेदप्रकाशः शास्त्री
(प्रोफेसर पदभाक्, संस्कृत विभागे)
गुरुकुल कांगड़ी विश्वविद्यालयः
हरिद्वारम्

# विषय-सूची

विषया: पृष्ठाङ्कः

# पाश्चात्यकाव्य शास्त्रस्य विकासक्रमः

पाश्चात्यकाव्यशास्त्रस्य महतीयं परम्पराजस्त्ररूपेण प्रवहमाना प्रत्यक्षेण परोक्षेण वा प्रकारेण सहृदयमानन्दयन्ती प्रवहतितराम् । मानवस्यास्तित्वेन सहैव काव्यस्यास्तित्वमपि दृष्टिपथमवतरति । काव्योद्भवेन सहैव काव्यस्य समीक्षणमपि समारब्धं समालोचकप्रवरैः । पाश्चात्यकाव्य समोक्षायां प्लेटो ४२७-३४७ ई० पू० कालात्पूर्वं यैः पिण्डारस होमर हेसिओड आटफियोस मासयस हेराक्लटियस गार्जियस-प्रभृतिभिः समालोचकैर्दैवी-प्रेरणाधारेण काव्यस्योद्भूतिरंगी कृता यदाधारेण प्लेटो महाभागेन तेषां मतस्य खण्डनं कृतम् । तेषां समालोचकानां सिद्धान्ता अद्य नोपलभ्यन्ते ।

प्रकृतिमानवयोः पारस्परिकसम्बन्ध विषये यदा मानवस्य जिज्ञासा समुद्भूता तदा रहस्यदर्शनेन चेतसि रति-हर्षशोकविस्मयादि भावा उद्भूताः तेषां भावानामभिव्यक्तये कलाकारैः संगीतस्य काव्यस्य चाश्रयोऽङ्गीकृतः । कालान्तरे काव्यविश्लेषणस्य प्रवृत्तिरुत्पन्ना, काव्यस्य स्वरूपप्रयोजन-मूल्यांकनेन समीक्षायाः द्वारं समुद्घाटितम् । साहित्यिक समीक्षायाः व ार्यम्—काव्यविषय—( Thought Countent ) तद् व्याख्यातदुपकरणभूतभाषाशिल्पाशोभामध्ययनं भवति अत्र कल्पनासौन्दर्ययोरुपरि चिन्तनमपिविधीयते । यथा भारते तथैव

पश्चिमेऽपिजगति काव्यचिन्तनं सुदूरकालादद्यावधि प्रचलितं वर्तते ।

**प्रारम्भिककालः**

पश्चिमकाव्यसमीक्षा प्लेटो (४२७ ई० पू० ३४७ ई पू०) कालादेव सुव्यवस्थितरूपेणोपलभ्यते । प्लेटोमहाभागेन सर्वमेव वस्तुजातमुपयोगिरूपेण परीक्षितम् । साहित्यसमीक्षणमपि तेनोपतोगिताधारेण कृतम् । तेन स्वयुगीन साहित्ये त्रयः समारोपाः समुपन्यस्ताः ।

१. साहित्यम् सत्याद्दूरे भवति ।
२ साहित्यम् मानवीयवासनाभ्यः समुदेति ।
३. साहित्यमज्ञानजन्यम् ।

प्लेटो महाभागस्य शिष्येण 'अरस्तू' महाभागेन पूर्वोक्ताः सर्वे समाक्षेपाः विखण्डिताः । यथा काव्यं नास्ति मात्रमनुकरणं तेन नवसृजनं भवति । साहित्ये व्यापकं सार्वभौमं सत्यम्, वासनाविरेचनं च भवति । 'अरस्तूः' साहित्य निर्माणस्य व्यावहारिकसमीक्षणस्य च मार्गं समुद्घाटितवान् । असौ काव्ये आनन्दतत्त्वस्य प्रतिष्ठापनं चकार ।

अरस्तू कालानन्तरं विद्वद्भिर्यूनानेऽलंकारशास्त्रवक्तृत्वकलादिविषयेषु ग्रन्थाः विलिखिताः । साहित्य समीक्षणस्य कार्यमवरुद्हम् ।

पाश्चात्यकाव्यशास्त्रस्य तृतीयः समालोचकप्रवरो लोंजाइनसो (ई० प्रथम शतके) वर्तते । अस्य मतमस्ति यत्

श्रोतुः पाठकस्य तन्मयीकरणमेव काव्यस्य लक्ष्यम्। अयं हि प्रथमः समालोचको वर्तते येन कवेः काव्यस्य भावुकस्य च गुणाः विवेचिताः। स्काटजेम्सः कथयति यदयं सर्वप्रथमः स्वच्छन्दः सौन्दर्योपासकश्च समीक्षको वर्तते। त्रयाणां यूनानी समीक्षकाणां समक्षे लेटिन भाषायां नास्ति कोप्यपरस्तरीयः समालोचकः। यद्यपि 'होरेस' महाभागेन-काव्यरचनाविषये महत्वपूर्णं कार्यं कृतम् तदपि तस्योपरि अरस्तू प्रभावो वर्तते। द्वितीयो हि लेटिन समीक्षकः क्विन्टीलियनो वर्तते येन शैलि-विषये गद्यविषये च तुलनात्मिका समालोचना कृता।

## पुनर्जागरण कालः

आंग्लसाहित्ये १४०० ईतः १:६० ई० पर्यन्तम् पुनर्जा-गरणकालो (Renoussance) वर्तते। मध्यकालीनधर्मा क्रान्त जीवनदर्शने मानवस्य महत्वं नासोत्। कतिपयैरांग्लसमीक्षकैः 'इटली' देशस्य मानवतावादोऽङ्गीकृतः। बुद्ध्या स्वीकृतान्येक-प्राचीनमतान्यङ्गीकृतानि। जार्नकालेठ इरास्मिकविवेसानां रचनासु एतदेव बुद्धिवाददृष्टिकोणमुपलभ्यते। विवेशेन कथितम् यद्-अरस्तोरन्धानुकरणं न विधातव्यम् विवेकपूर्णं तु तन्मतमनुकरणीयम्। इरास्मिकेनापि प्राचोनानां विरोधं विधाय यान्त्रिकानुकरणस्य निन्दा कृता।

१५७० ई० कालात्साहित्यस्य प्रकृतिः कला च गाम्भी-र्येण व्याख्याता जाता। रिचर्डविलियम महाशयेन निगदितम्-यत्साहित्यम् सद्गुणोद्भावने क्षमम् तेन वासनोत्तेजना न

जायते। काव्यं तु 'सत्यं शिवं सुन्दरम्' भवति तेन स्पष्टरूपेण कथितम् यत्काव्यम् नास्ति जीवनस्य प्रतिफलम् नापि प्राचीनादर्शानुकरणम् तत्तु नवीनं सृजनम् भवति।

अस्मिन्युगे 'पटैन्हम्' महोदयेन काव्यकारणेषु दैवीप्रेरणा-लोकानुभव प्राकृतिकशक्तयश्च त्रयमेव काव्यस्य हेतुर्भवतीति स्वीकृतम्। काव्यविषयस्य वर्गीकरणं कुर्वन्नसौ तस्य भेदत्रयं प्रतिपादयति यथा— (१) वास्तविकः (२) काल्पनिकः (३) मिश्रितश्च।

शिक्षादानमानन्दावाप्तिश्चेति द्वे काव्यप्रयोजने, पुनरपि काव्यस्य परमानन्दमेव मुख्यं लक्ष्यम्।

नवशास्त्रवादः

वेन जानसनस्य 'डिस्कवरीज' ग्रन्थे प्रतिभाभ्यासानु-करणाध्ययनानि काव्यकारणरूपेणापन्यस्तानि। अनेन हि— शेक्सपियरकवेः समीक्षाकृता। अस्मादेव नवशास्त्रवादस्य समारम्भो भवति। बोयलोमहाभागेन साहित्यकाराणामाचार संहितायां 'आर्टपोएकिके' काव्योद्देश्य-काव्यप्रकृतिकाव्यरूपाणां नियमाः निर्धारिताः अनेन कारणेन काव्यम् नियमेषु निगडितं जातम्। अन्यत्र साहित्ये नैतिकोपदेशेन स्वच्छन्दाचारेण च काव्यक्षेत्रे स्थानमवाप्तम्। एवं हि-सप्तदशशतके नव्यशास्त्र-वादस्वच्छन्दतावादयोर्मध्ये संघर्षोऽभवत्।

अष्टादशशतके कतिपयैरांग्लसमीक्षकैः प्राचीन काव्य-सिद्धान्तानां गाम्भीर्येण विश्लेषणं विधाय काव्यं सरसं सरलं-

कल्पना सौन्दर्यान्वितं भवेदिति प्रतिपादितम् । ड्राइडनपोप डा० जानसनादयः स्वयुगीनकाव्यस्य सहृदयतया समीक्षां विधाय नव्यशास्त्रवादस्यान्धानुसरणे विरताः समभवन् तैर्नियमसिद्धान्तानुपालने सार्वभौममानवीयप्रकृतेराधार एवोचित इति सिद्धान्तितम् । औदार्येण सार्वभौमिकभावेन कल्पनाप्राधान्येन च काव्यस्वरूपं विश्लेषयन् 'एडीसनः' स्वच्छन्दतावादस्याग्रदूतरूपेण प्रसिद्धः । एवमष्टादश शतकस्य कालः समीक्षा क्षेत्रेबुद्धिविवेकयुगरूपेण विख्यातः । स्वच्छन्द-वादिभिर्नवशास्त्रवादस्य विरोधः कृतः ।

१७९८ ई० काले वर्ड्सवर्थस्य 'लिरीकल वैलड्स' ग्रन्थस्य प्रकाशनेनांग्लसाहित्ये स्वच्छन्दतावादस्य प्रावल्यं संजातम् । फ्रांसस्य राज्यपरिवर्तनेन रूसो वोल्तेयर गेटे महाभागानां विचारेण च स्वच्छन्दतावादे नवीनोन्मेषाः प्रस्फुटिताः रीतेरुन्मुक्ते काव्ये व्यक्तिवादात्मपरकत्वभावोद्रेक-कल्पनादीनां साम्राज्यमभवत् । स्वच्छन्दकविभिः केवलं काव्योचितसौन्दर्यमेवोद्घाटितम् । व्यावहारिक जगता सह नास्ति तेषाँ कोऽपि सम्बद्धः । वर्ड्सवर्थेन काव्ये सामाजिक तत्वस्यावहेलनं विधाय मनोवेगानाँ प्रमुखता प्रतिपादिता । शेले कथयति—

'Poetry is the expression of imagination.'

कालरिज महाशयेन न केवलं कल्पनासिद्धान्तः प्रति-पादितस्तेन तु मनोवैज्ञानिकैतिहासिक समीक्षणमपि कृतम् ।

स्वच्छन्दतादिभि: काव्यस्य स्वस्थ: स्वरूप: समुपस्थापित: ।

एकोनविंश शतके विभिन्नमाध्यमेन जनजीवनं साहित्यं चोभयमेव प्रभावितं परिवर्तितं च । उभयोरुपरि राजनैतिकौद्योगिकक्रान्तीनाम्, वैज्ञानिकानुसन्धानानाम्, मनोवैज्ञानिकोपलब्धीनाम्, डार्विनविकासवादस्य; मार्क्सद्वन्द्वात्मक भौतिकवादस्य फ्रायडकामवादस्य च बहु प्रभावो वर्तते । अनेन हि साहित्ये नानामतवादा: प्रचलिता: यथा—सन्त: प्रतिपादयति साहित्यपरीक्षणमैतिहासिकवैज्ञानिकदृशा-विधातव्यम्-

'I analyze, botanize, I am a naturalist of minds.'

कार्लाइलशास्किनटालस्टादयो नीतिवादिन: समीक्षका: काव्ये न्याय्यस्य प्रशंसनम्, अन्याय्यस्य निन्दनं कुर्वन्ति । तेषां मते—कलैका दिव्याशक्ति: ।

Art is the expression of the souls talking to one another.

अस्मिन्नेवशतकान्ते आदर्शवादविरोधे 'कलाकलायै' इति वादस्याविर्भाव: 'स्विनबर्न' (१८३७-१९०९) महाभागेन कृत: । अस्य (Poems and ballads) रचनया बिक्टोरियन युगस्य नैतिकाचरणमपि प्रभावितम् । वाल्टर पेटर: कथयति यत्—काव्ये सौन्दर्यसाधना नीतिधर्मोपदेशादि केनापि सह साम्यं न बिभर्ति । कलाकारस्य कर्तव्यम् स्थूल सौन्दर्येण

सूक्ष्म सौन्दर्यस्याविष्करणम् भवति । आस्कर वाइल्डस्तु इन्द्रियानुभूतीनाँ संपोषणमेव जीवनस्य परमलक्ष्यमुद्घोषयति । तेन 'कलाकलायै' 'भावावेग: भावावेगाय' सिद्धान्तयो: परापुष्टि: कृता । आन्दोलनेऽस्मिन्फ्राँसे फ्लावेयर गोटियें वोदलेयरा:, इंग्लैण्डे पेटरवाइल्डौ, अमरीकादेशे एडगट ऐलेनयो सहृशै: समालोचकैमहत्कार्यं सम्पाददितम् ।

विंशतिशतके साहित्यसमीक्षाक्षेत्रे विभिन्ना: प्रवृतय: प्रचलिता: । अस्य शतकस्य प्रारम्भे स्वचछन्द बिम्बवादस्य विरोधे 'इरविन वोटव' सहृशैर्नीतिवादिभि: काव्ये नीति-सदाचार योर्भहत्वमुपपादितम् । इटालिन दार्शनिकेन क्रोचे महाभागेन भौतिकवादस्य विरोधं विधाय काव्ये सहजानुभूति-रभिव्यं जना + वादयोस्तत्वमुपपादितम् । अस्मिन्समये प्रतीक-वादेनामूर्तस्य मूर्तीकरणम् । मनस: सूक्ष्मविबेचनं च कृतम् ।

अस्मिन् विंशतिशतके फ्रायडमार्क्स विचारै: साहित्यं प्रभावान्वितं वर्तते । फ्रायड: जीवने साहित्ये च कामस्य मुख्यं प्रयोजनं समाजकल्याणकरणमेवास्ते आधुनिके साहित्ये विज्ञानस्य विशेषत: मनोविज्ञानस्य प्रभावो वर्तते । आई० ए० रिचर्ड्सेन साहित्यालोचने वैज्ञानिकीप्रक्रिया समुपस्थापिता । टी० एस० ईलियटस्य मतमस्ति यत् 'भावोन्मोचनं नास्ति काव्यम्, भावेभ्य: पलायनमेव काव्यम् । तन्मते परम्परा-धारेण—भूतपूर्वकवीनां सम्बन्धेन च काव्यविवेचनं भवति ।

वर्तमान काव्यसमीक्षणेऽतीतपरम्परानुसन्धानमावश्यकम्। एवं हि—समालोचना रोमाँश विरोधिनी प्रभावविरोधिनी च (Anti Romantic and Anti impressionistic) भवति। समालोचनेयं व्यक्तिवादेन भावोद्रेकेण च विरुद्धा Nec Humanistic वर्तते।

अधुनातमे कालेऽमेरिकादेशे कलाकृतेर्मूल्यांकनं सर्वथा-निरपेक्षपद्धत्या स्वतंत्रवस्तु रूपेण (Definite enlity) प्रचलितं वर्तते।

नवसमालोचनायां काव्याङ्गानामेकान्वित्या पारस्परिक सम्बन्धे विचारो विधीयते। समालोचकः भाषा शिल्प कुशलतां विवेचयति। अत्र काव्यमूलपाठस्य Text भाषा-विज्ञानस्यार्थविज्ञानस्या Sementic ध्ययनं भवति। मूलरूपेण Archetyle मिथकेन Myth प्रतीकेन Symbol आधुनिकी समालोचना नव्यतरासंजाता। नवसमालोचकः स्वीकरोति यत् काव्यं भावोद्रेकस्य परिणतिर्नास्ति काव्यं तु श्रमसाध्यं कार्यं वर्तते अद्य दुरुहत्वमस्पष्टत्वं च काव्यस्य कृते परमा-वश्यकं तत्वम्। 'रेन्सम' विचारे चमत्कार एव काव्यम्।

# यूनानीकाव्य शास्त्रिणः
## - प्लेटो -

### ( १ )

यूनानी समीक्षकः (४२७ ई० पू०, ३४७ ई० पू०)

'प्लेटो' मूलतः एको दार्शनिक आसीत्। अनेन स्व-युगीनचिन्तकानुरूपं जीवनस्य विभिन्नपक्षेषु राजनीति-साहित्यादिष्वपि स्वकीयाः विचाराः प्रकटिताः। जीवनस्य शाश्वतप्रश्नेषु विचारं कुर्वता तेन परमसत्यस्य परिकल्पना, कृता अस्यैव सत्यस्यालोके अन्यासां क्रियाणां सर्जनानां विवेचनं मूल्यांकनं च कृतम्।

परमसत्यस्य प्राप्तिहेतौ सर्वाः क्रियाः सर्जनाः फलवत्यो भवन्ति, अनयैव दृष्ट्या अनेन काव्यविषये स्वकीयाः विचाराः संप्रकटिताः। परमसत्यस्य लाभाय काव्यं साधकं वाधकं वेति विचार-सरणिमादाय तेन निगदितम्—यत् काव्यं परम सत्यस्य दर्शने साधकं तदेव ग्राह्यं नेतरत् यदि काव्यस्य स्वरूपं प्रेरणा प्रभावश्च नागरिकं सत्यात् दूरं नयति तदा काव्यमेतत् सर्वथा त्याजनीयं भवति।

वस्तुतः प्लेटोमहाभागेन मूलरूपेण काव्योपरि विचारः न कृतः काव्यशास्त्ररूपेण अस्य विवेचनं प्राथम्यं न विभर्ति

अस्य काव्यशास्त्रविवेचनं गौणमानुषङ्गिकञ्च वर्तते । सदपि गौणमानुषङ्गिकञ्च विवेचनं काव्यस्य मूलाधारत्वं तु स्पृशत्येव । प्लेटो मूलतः दार्शनिक आसीदतो हि-दर्शन काव्ययोर्मध्ये विरोधिभावाः स्वतः एवोन्मिषन्ति, प्लेटो निर्भ्रान्तिरूपेण स्वीकरोति यद् काव्यस्यास्तित्वं परमसत्य-सापेक्षं वर्तते । काव्यस्य महत्वं तदैव भवति यदा तत्-जीवनस्य सत्यादर्शप्रकाशने सक्षमं भवेत् ।

प्लेटो महाभागेन द्विविधदृष्ट्या काव्योपरि विचारः कृतः अनेन स्वकीय युगस्य काव्यमाधारीकृत्य एतद्विचारितं यदिदं काव्यमस्य प्रेरणा विषयाः प्रभावश्च सत्यपरिपोषकाः सन्ति न वा । काव्यमिदं मानवजीवनं कल्याणमार्गे प्रेरयति न वा । प्लेटो महाभागस्य सापेक्षं दृष्टिकोणमेहत् संकेतयति यत् परम सत्यात् परिभ्रष्टं होमर सदृशैः कविभिर्विरचितं काव्यं नगराद बहिष्करणीयम् । परञ्च निष्कर्षेणानेनऽसौ काव्यमात्रस्य विरोधीति न विभावनीयम् यतो हि स एतादृशं काव्यं सहर्षं स्वीकरोति यन्मानवस्य सत्प्रवृत्तीः सम्वर्धयति । स हि स्वीकरोति यत् काव्यं सत्यं प्रति नयति, जीवने अनुशासनं संयमं व्यवस्थां च सम्पादयति तदेव सत्काव्यम् ।

वस्तुतः प्लेटो महाभागेन काव्यस्य विरोधः युगीन-काव्यानुसारेण विहितः ।

प्लेटो गणराज्यस्य नागरिक चरित्रे सत्यन्यायसदाचरण-

भावनायाः संप्रतिष्ठानार्थं काव्यस्य महत्वं स्वीकरोति । कलाभिः सत्येन च परमानन्दस्य लाभो न जायते । महत्वहीनो हि स आनन्दः येनोपर्युक्तलक्ष्याणां सम्पूर्तिर्न जायते । तन्मते कलासाहित्योर्निकषमुपयोगिता एव वर्तते लौकिकानन्द-सौन्दर्ययोः वा नास्ति काव्यक्षेत्रे कोऽप्यवसरः। अस्मिन् प्रसंगे तस्य धारणेयं वर्तते यद् वस्तु–उपयोगितां बिभर्ति तदेव सुन्दरं गोमयेन परिपूर्णा कण्डिका सौन्दर्यवतो यदि तस्याः सदुपयोगः स्यात् । अन्यथा सुवर्णनिर्मिता रत्नजटिता वा जाज्वल्यमाना करवालधारा – अपि असुन्दरा यदि सा अनुपयोगिनीस्यात् ।

काव्यप्रेरणा हेतवश्च

प्लेटो महाभागेन काव्यप्रेरणार्थं तत्वद्वयस्य चर्चा कृता (१) काव्यदेव्या आवेशः (२) कला च ।

(१) प्लेटो महाभागेन सुस्पष्टतया स्वीकृतं सा हि रचना चिरस्थायिनी भवितुं शक्यते या काव्यदेव्याः प्रसादेन निर्मिता स्यात् ।

(२) कलाया अभिप्रायः—काव्यशास्त्रस्य ज्ञानं काव्यशास्त्रोयनियमानुसारं रचना च ।

प्लेटो काव्यसम्बन्धिमतं भारतीय काव्यमतेन साम्यं बिभर्ति । यतो हि मम्मटेनाऽपि ।

'शक्तिर्निपुणता तत्र लोकशास्त्राद्यवेक्षणात् ।
काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे' ।।

इति निगदितम् ।

**काव्यवस्तु विचारः-**

प्लेटो महाभागेन केवलं दार्शनिकदृष्ट्या काव्यवस्तुविचारः कृतः। काव्यस्य दृष्ट्या तस्य सिद्धान्ताः नोपलभ्यन्ते। प्लेटो परमसत्यस्वरूपमाधारीकृत्य सृष्टिसम्बन्धिनीं विचारधारामवतारयति तदन्तरं काव्यवस्तुविचारं प्रकटयति। स हि अनुकृतेरनुकृतिः काव्यमिति स्वीकरोति। काव्यसत्यंमूलसत्यात् त्रिगुणितं दूरमिति स्वीकरोति च तथ्यमिदं दृष्टान्तेनानेन सुस्पष्टीक्रमम्। प्लेटो मतानुसारमीश्वरः सृष्टेः निर्माता, पर्यङ्कासन्दी (कुर्सी) इत्यादि वस्तूनामुदाहरणं दददसौ कथयति यदेषां स्वरूपानिर्माणं तु ईश्वरेणैव कृतमतः परमासत्या तु एषामाकृतिरेव या हि ईश्वरेणैव विनिर्मिता। रथकारस्तु ईश्वरविनिर्मिताकृत्यनुसारेण पर्यंकादीनां निर्माणं करोति। यतो हि— ईश्वर आद्य निर्माता रथकारस्तु निर्मितसृष्टिसाहाय्येन तदाकृतेरनुकरणं करोति। एवं भौतिकीयं सृष्टिर्नास्ति परमसत्यरूपा। इयं तु ईश्वरस्य चेतनायां विचाररूपेण निर्मिताकृतीनामनुकृतय एव सन्ति। अनुकृति स्वरूपा सतीयं सृष्टिः मूलसत्यात् सुदूरतरा एव। इयं हि निम्नस्तरीया रचना। सिद्धान्तोऽयं वर्तते यद्—अनुकृतिरनुकार्यात् हीना निम्नस्तरीया च भवति।

अनया दृष्ट्या तेनानुकरणस्य द्वाभ्यां स्तराभ्यां विरोधो विहितः।

१. दार्शनिक रूपेण –

अनुकरणं हि सत्याज्जनं दूरी करोति ।

२. लोककल्याण रूपेण -

कविरनुकर्ता भवति तदपेक्षया—
वीरनायकस्य (अनुकार्यस्य) महत्त्वं बहु वर्तते । नायकः (अनुकार्यः) स्वकीयकार्यैः ख्यातिं सम्मानं च लभते । प्रसङ्गेऽस्मिन् प्लेटोः कथयति त्रासदीकारेण कृतं चिकित्सकस्य सेनापतेर्वा अनुकरणं न याथार्थ्यं बिभर्ति । यतो हि कविः न चिकित्साज्ञानं नापि सैन्यसंचालनं जानाति ।

अस्मिन् विषये प्लेटो महाभागस्य विचारः जीवनविषये कौशले काव्य विषयक—कौशले च तारतम्यं न निमालयति । यतो हि वीरनायकः वीरकविश्च विभिन्नगुणविभूषितौ भवतः । सैन्यनायकगुणाः कविजीवने नानिवार्याः, कविगुणा अपि सैन्यनायके नानिवार्यरूपेण प्राप्यन्ते । द्वयोरेव व्यक्तित्वे-क्रियाकलापे च महदन्तरं भवति । स्वकीये स्वकीये क्षत्रे द्वयोरेवानुपमं महत्वं वर्तते ।

**काव्यस्यप्रभावः**

दार्शनिकशिरोमणेः प्लेटो महोदयस्य सर्वाधिक्यमहत्व-पूर्णनिर्णयोऽयं वर्तते यत् काव्यं तादृशं भवेत् येन समाजे

सद्वृत्तिजागरणं, असतः अशुभस्य वा निवारणं भवेत्। येन काव्येन विवेकविनाशः, निम्नवृत्तीनां विकासः, ऐन्द्रियानन्दस्योपलब्धिर्भवेत्, तत् काव्यं सर्वथा त्याज्यं भवति।

प्लेटोः काव्यं सर्वथा न निषेधयति स सामाजिक समुत्कर्षविरोधिनः आत्मोत्कर्ष विघातकस्य काव्यस्य निन्दां करोति।

आक्रोशेन निगदति प्लेटो—अस्माभिर्यः प्रदेशः सुशासनोयो वर्तते तस्मिन् प्रदेशेकविप्रवेशो निषेधितव्यः। स हि आत्मनोऽसदंशं संजनयति पुष्णाति, पोषयति, विवेकांशं च नाशयति। कविः समेषां चेतसि लीनप्रवृत्तीनां प्रतिष्ठापनं विदधाति। असत् तत्वस्य परितोषं विधाय महच्छूद्रयोर्भेदं निराकरोति। कविः स्वकाव्ये एतादृश्यः छायाः सृजति याः जनं सत्याद्दूरं नयन्ति।

अनेन हि उपयोगितावादिदृष्टिकोणेनैव साहित्योपरि विचारः कृतः दौर्भाग्येन तस्मिन्समये यूनानीसाहित्यं कामोत्तेजनभावोद्वेलनप्रधानमासीत्। वस्तुतः समाजहित दृष्ट्या नोपयोगि भवति काव्यमिदम्। प्लेटो महाभागेन काव्यसाहित्यविरोधे वहवः समारोपाः प्रस्तुताः क्रमशो यथा।

१. मिथ्यात्वम्-

प्लेटो मतानुसारेण काव्यं साहित्यं वा मिथ्याजगतो

मिथ्यानुकृतिर्वर्तते। साहित्यकारेण वस्तुव्यक्तिक्रियामाध्यम द्वारा यद्वर्णनं विधीयते तत्तु पूर्वमेव भौतिकजगति विद्यमान मेवास्ते कविस्तु केवलं तेषामनुकृतिमात्रं प्रस्तौति। एवं कविः परमसत्यात् त्रिगुणितो दूरतमो जायते त्रिगुणितस्य असत्य-भावस्य प्रणेता दण्डनीयः। अतोहि कविः न प्रशंसनार्हः।

## २. काव्यममौलिकम् अज्ञानकृतं च

कविः चित्रकारश्च प्रतिकृतिमात्रं प्रस्तौति। कृतिसृजनं तस्य कार्यं न। अतः स अज्ञानेन, अमौलिकज्ञानेन चारोपितो भवति। एकः चर्मकारः—उपानद्द्वयनिर्माणे सन्नपि—अमौलिकः अज्ञानी न भवति यतोहि चर्मकारः उपानन् निर्माण ज्ञानं बिना तस्यानुकृतिकरणे सक्षमो न भवति परञ्चकवि-चित्रकारयोरुपरि नैषः नियमः प्रभवति। अतः कविज्ञानं कर्म वा चर्मकार ज्ञानकर्माभ्यामपि न्यूनम्। कविः चित्रकारो वा चर्मकलानभिज्ञो भूत्वापि तस्य चित्रणं करोति सरलप्रकृति जनेषु बालेषु वा एषा धारणा जायते यदयं कविः चित्रकारो वा अस्याः चर्मकलायाः कर्ता वर्तते। अनेन प्रकारेण कविः केवलम् अज्ञानी एव न, स तु अज्ञानस्य प्रसारकोऽपि जायते।

### अनुपयोगिता

साहित्यकारस्य रचना, चित्रकारस्य चित्रं, कवेः काव्यं वा प्लेटो विचारे सदुपयोगी न सिद्ध्यति। कलात्मिका:

सर्वाः रचनाः तन्मते अनुपयोगिन्य एव सन्ति। अतोहि स—होमर सदृशकवीनां तुलयनायां चिकित्सा कर्मसंलग्नानां रोग निवारकाणां वैद्यानां—राज्यशासनसंचालकानां नेतृवर्याणां महत्वमधिकं स्वीकरोति। प्लेटोः कविजनेषु काव्याङ्गगुणान् नानुचिन्तयति स तु कविजनेषु चिकित्सकनायकवीरशिक्षकादीनां गुणान् अन्वेषयति। तस्य अयं प्रयासः तादृश एव यथा कश्चन विख्यातां अभिनेत्रीं पृच्छत् 'कि भवति ! त्वं गृहे सम्मार्जनीसँचालनं जानासि न वा' यदि उत्तरे निषेधः स्यात् तदा तु तन्मते सा सर्वथानिन्द्या, कुरूपा च निरूपितव्या भविष्यति।

४. कविः दौर्बल्यस्य अनाचारस्य च संपोषकः

प्लेटो विचारे कविः न केवलमनुपयोगी विचारशून्यश्च अपि तु स समाजेदौर्बल्यस्य अनाचारस्य संपोषकः सन् सापराधोऽपि भवति। प्लेटो विचारे—कस्मिन्नपि समाजे राज्ये वा सत्यन्यायसदाचाराणां प्रतिष्ठा तदैव सम्भाव्यते यदा तस्य सर्वेऽपि जनाः स्ववासनानां दुर्भावनानां नियन्त्रणे सक्षमाः भवेयुः, विवेकबुद्धया नीतिज्ञानानुसारेण सँचलेयुः एतद् विपरीतं कविः स्वरचनामाध्यमेन जनानां वासनाः दुर्भावनाश्च समुद्वेलयति। यद्यपि प्लेटोः स्वीकरोति यद् काव्यादानन्दो जायते किन्तु स आनन्दः दुराचार दौर्बल्य-प्रवृत्तिसंजनने परायणः स हि न सत्यानन्दः। अतः प्लेटोः काव्यनिन्दां करोति।

उपलब्धय :

सामान्यरूपेण प्लेटो महाभागस्य सर्वे समाक्षेपाः निरर्थकाः बुद्धिविभ्रमजनका एव सिद्धयन्ति निर्णयोऽयं सत्सा-हित्यकाराणां सात्विकरचनाधारेणैव कथयितुं शक्यते । अनेके कवयः रचनाकाराश्च स्वकीयां कवितां रचनां च वासनानां कुण्ठानाम् अनाचाराणां चाभिव्यक्तेः माध्यम रूपेणैव प्रस्तुवन्ति । दौर्भाग्येन 'प्लेटो' अपि एतादृशे काले आसीत् यदा कविताकामिनी वासनोन्मत्तानां क्षुद्रजनानां कारागारे बद्धा सतीत्वं विहाय नग्ननर्तने विवशा संजाता । एतादृश्यां स्थितौ समाजेन समुपेक्षिताः निर्वासिता कविता कामिनी निन्दां लभते तत्तु स्वाभाविकमेव ।

काव्यनिन्दनं कुर्वन्नपि प्लेटोमहाभागः काव्यस्वरूप विषये प्रक्रियाविषयेमहत्वपूर्णं संकेतं प्रददात्येव अस्मिन् विषये नास्ति संशयः :

यथा—

१. तेन काव्यमीमांसा क्षेत्रे काव्यमनुकृतिरिति सिद्धान्तितम्, परिवर्तिनि युगे मतमिदं काव्यमीमांसाया आधारः संजातः ।

२. काव्यानुभूतेः स्वरू[illegible], आ[illegible]न्ददा[illegible]यकत्व[illegible] [illegible]र श्च [illegible]

लनम् तेनाङ्गीकृत्य रसास्वादन प्रक्रियाया: संस्थापनापि समुन्मिषितेव।

पुनरपि एवं दृष्टिकोणस्य संकोचतया यद् युगीन दूषित प्रवृत्तीनां प्रभावेन च स काव्यतत्वस्य निष्पक्षं संतुलितं च दर्शनं न कृतवान्। सत्यमेतत् प्लेटो: नास्ति काव्य-मीमांसक: स हि दार्शनिक: राजनीतिकश्चास्ते।



## — अरस्तू —

( २ )

यूनानी काव्यसमालोचकः

(३८४ ई० पू०— ३२२ ई० पू०)

अरस्तू महाभागस्य काव्यसिद्धान्तद्वयम्—

१. अनुकरणसिद्धान्तः । २. विरेचनसिद्धान्तश्च ।

प्लेटो महोदयस्य शिष्यः यूनानवास्तव्यः काव्यसमीक्षापरायणः श्री अरस्तूः (३८४ ई० पू० ३२३ ई० पू०) वैज्ञानिक विश्लेषणपरया प्रतिभया स्वगुरोः प्लेटोमहाभागस्य विचारान् ममन्थ । विचारमन्थने जाते सति तेन स्वकीयाः ये विचाराः संप्रकटिताः ते प्लेटो विचारविरुद्धाः संजाताः । अरस्तू महोदयेन स्वकीये ग्रन्थद्वये-पोयटिक्स रिटारिक्से—स्वकाव्यसिद्धान्तविवेचनं विस्तरेण कृतम् । यन्निम्नाङ्कितं वर्तते—

१. अरस्तूः काव्योपरि मौलिमनुसन्धानं कृतवान् । काव्योद्भवविषये मानवमनसः द्वे सहजे प्रवृत्यौ प्रभवतः ।

[क] अनुकरणात्मिकाप्रवृत्तिः ।

[ख] संगीतप्रियता—

लयस्वरयोः—समन्वयेनानन्दमौत्सुक्यं जनयंतीसहजारुचिर्यथा दर्शनविज्ञानयोर्निर्माणं विदधाति तथैव एताभ्यां प्रवृत्तिभ्यां काव्यस्योत्पत्तिर्जायते । गीतिकाव्येन

सहगामेन (कोरसेन) नाटकं समुद्भूतम् । रोमर महाकवेः काव्यैः ट्रेजरी-कामेडी-द्विविधे रचने संजाते ।

२. कविना केवलं नैतिकोपदेशाः आदेशाः वा न प्रदातव्याः यद्यपि स स्वकीये पोटटिक्सेनिगदति 'यत्' वालकेभ्यः कविता संगीतं च शिक्षादानोद्दृश्यं भवितु. शक्यते । परन्तु काव्यस्योददेश्यं तु भावनात्मकानन्ददानमेस्ते । मनो-विनोद जन्यार्तक्रोडाजन्याद् वानन्दात् काव्यजन्यानन्दः प्रथगेव वर्तते । यतो हि काव्यानन्देजीवनन्य परमार्थं तत्वं परिस्फुरति ।

३. अरस्तू मते काव्यस्य पंचप्रभेदाः—
१. महाकाव्यम्, २. ट्रेजडो, ३. कामेडो, ४. रौद्र स्तोत्रम्, ५. गीतिकाव्यम् । एषु प्रथमद्वितीय, तृतोयाः प्रभेदाः महत्वपूर्णाः महाकाव्यं तु सर्वोत्कृष्टम् ।

४, अरस्तू काव्ये लयस्वरयोर्महत्व मङ्गोकुर्वन्नपि छन्दसोऽ-निवार्यता काव्ये न स्वीकरोति ।

५. काव्य निर्माणनिरतेषु देवीप्रेरणा काव्यकलाज्ञानमभ्या-साश्चावश्यकरूपेण सम्भवन्ति ।

पाश्चात्यकाव्यशास्त्रस्य विकासाय प्लेटो महाभागेना-धारभूमिका निर्माणं कृतम् परञ्चास्य मौलिकं चिन्तनं दर्शनाश्रिततममासीत् । अरस्तु महाभागेन तु काव्याश्रितया दृष्ट्या याथार्थिकं काव्यविवेचनमारब्धम, अरस्तु स्वकोयजीवने

४०० ग्रन्थनिर्माणं चकार-तर्कशास्त्रे, भौतिक शास्त्रे, मनोविज्ञाने, राजनैतिकशास्त्रे, आचारशास्त्रे, काव्यशास्त्रे च तस्य सारगर्भितं विवेचनं समुपलभ्यते। अस्य साहित्यसम्बन्धिनो विचाराः पोयटिक्सरिटारिक्से गन्थद्वये विस्तरेण वर्णिताः सन्ति।

## काव्यसत्यस्य स्वरूपविवेचनम्

'ब्रह्मसत्यम्जगद् ब्रह्मणोऽनुकृतः, अनुकृतेरनुकरकरणं काव्यमसत्यमपूर्णं च भवतीति' स्वगुरो; प्लेटो-महाशयस्य सिद्धान्तं विखण्डयन्नरस्तूः कथयति यत् 'काव्येन मानवजीवनस्य सार्वभौमशाश्वततत्वस्य चाभिव्यक्तिर्जायते, यज्जातं तस्यैव वर्णनं नास्ति कवेः कर्म, यत्सम्भाव्यं यच्चावश्यकं तच्चित्रणं कवेः कार्यम्। कवीतिहासकारयोर्मध्येऽयमेव भेदः- इतिहास-कारस्तस्यैव वर्णनं करोति यद् भूतम् ,कविस्तु सम्भाविनमप्यर्थं चित्रयति।

अरस्तूः सत्यस्यरूपद्वयं प्रतिपादयति-

१. व्यापकं सार्वभौमिकं सत्यम्-

२. सीमितं विशेषसत्यम्-

काव्यसत्यं व्यापकं सार्वभौमिकं सत्यम् यद् देशकालादि सीमातीतं भवति, अत्र मानवीयाः सहजधर्माः, प्रकृतिजन्याः क्रियाकलापाः वस्तुतत्वनिरपेक्षाः सम्भाव्यरूपेणोपस्थापिताः भवन्ति।

सीमितं विशेषसत्यम्, यत्पूर्वं घटितं तद् देश-कालादि सीमाबद्धं जातं तदेव विशेषं सीमितं जागतिकं सत्यम्।

अरस्तूविचारे संसारे यदसंभवद् वस्तु-तदपि काव्ये नास्ति सर्वथा त्याज्यम्। परम्पराधारेणासंभवदपि यदा कदा काव्ये न्यायोचितं भवति। काव्यसत्यस्वरूपेऽसंभाव्यतत्वाङ्गीकारे तेन त्रय उद्देश्याः संप्रकाटिताः—

१. कलागतावश्यकतानां कृते।

२. वस्तुसत्यस्य भव्यतरसत्यप्रतिष्ठायै।

३. परम्परागताः धारणाः विश्वासा वा।

डा० नगेन्द्रेण—अरस्तु काव्यसत्यस्य विषये साररूपेण कथितम्—

१. काव्यसत्यं वस्तुसत्यस्य तथ्यस्य वा नास्ति पर्यायः।

२. यज्जातं जायमानं जनिष्यमाणं वा नास्ति तदेव सत्यम् किन्तु यज्जीवन विधानानुगतं सम्भाव्यं तदपि सत्यम्।

३. वस्तुजगतो यथार्थमेव नास्ति सत्यं, मानवादर्शविश्वास-परम्पराधारणा अपि सत्याः।

४. काव्यसत्यं देशकालसीमाविनिर्मुक्तं सार्वभौमं सार्व-कालिकं सद् वस्तुसत्याद् भव्यतरं भवति।

५. वस्तुजगति यदसम्भवदसंगतं च तदैवोत्ततोद्देश्येन काव्ये काव्यसत्यं जायते।

६. सत्यमिदममूर्तविचाररूपेण न भवति, अस्य निश्चितं मूर्तं च माध्यमं भवति।

७. काव्यसत्यं निरंकुशं न भवति, विवेकाङ्कुशेन तन्नियंत्रितं भवति ।

विरेचन सिद्धान्तः

काव्यप्रभावं विश्लेषयन्नसौ विरेचनसिद्धान्तं प्रतिपादितवान् । काव्यजन्यविकाराणां परिणामेण महदुपयोगिस्वास्थ्यप्रदं चावस्थानं जायते । यतो हि काव्यप्रसूत विकारेषु-भावेषु-विश्रम्भता ज्ञायते तेनहि शारीरिकेषु च विकारेषु परिपूर्णः प्रभावः पतति । तदा विरेचनसिद्धान्तानुसारेण पूर्वं स्थिताः विकाराः स्वां तीव्रतां तीक्ष्णतां च परित्यजन्ति तदा भावजगति नवीनं सामंजस्यं समुपतिष्ठते । विचाराणां चेतसः निष्कासनं परिशोधनं च विरेचनशब्दस्यार्थः ।

मूलतः विरेचनशब्दः चिकित्साशास्त्रेण सम्बद्धः । औषधद्वारा शारीरिकविकारपरिशोधने विरेचनेन भवति साहित्यशास्त्रे विरेचन शब्दस्य प्रयोगः अरस्तूः एव कृतवान् । दूषितमनोविकाराणां चेतसः निष्कासनार्थं त्रासदीकाव्यप्रसङ्गे तेनोक्तम्—करुणात्रासोद्वेगाः मनोविकारान् विरेचयन्ति । स्पष्टमेतत् यत् कलानां लक्ष्यं मनोविकारविरेचनमेव । काव्येन कलाभिश्चसर्वविधिभावानामुदीप्तिरभिव्यक्तिश्च भवति । विरेचनस्य सम्बन्धस्तु विकृतैरशुद्धैर्भावैः सह प्रभवति । कलुषितानामशुद्धानां भावानां रेचनेनान्दोपलब्धिर्भवितुं शक्यते परन्तु शुद्धानां पवित्राणां भावानां परिशोधनविषये विरेचनं

किं करिष्यति ? अस्मिन् प्रसङ्गे विरेचनचर्चा न कार्या ।

**विरेचनशब्दस्यविविधा अर्थाः–**

विरेचन शब्दस्य व्याख्यांर्थं कुर्वद्भिराचार्यैस्य शब्दस्य विभिन्ना अर्थाः कृताः तेषां त्रिभेदेषु विभाजनं कृतम् । १. धर्मपरकोऽर्थः २. नीतिपरकोऽर्थः ३. कलापरकोऽर्थः ।

(क) धर्मपरकः

अस्मिन्नर्थे-बाह्यविकारान्स-मुद्दीप्य तेषां शमनेन आत्मनः परिशोधनम् शान्तिलाभश्च ।

(ख) नीतिपरकः

अस्मिन्नर्थे-मनोविकारान्समुद्दीप्य विभिन्नान्तर्वृत्ति समन्वये मनसः शान्तिः परिस्कृतिश्च ।

(ग) कलापरकः

अस्मिन्नर्थे विदुषां मतभेदोऽस्ति । केचन विद्वांसः स्वीकुर्वन्ति यत् कलाजन्यानन्दोऽपि विरेचनपरिधौ समापतति । अपरेषां विचारे विरेचनं नाम अभावात्मिका (विकाराणामभावः) क्रिया वर्तते, परितोषस्यानन्दस्य वा समावेशः अस्य परिधौ नायाति । अपरे मतमिदं नाङ्गीकुर्वन्ति ।

प्रो० ब्रूचर महाभागेन समन्वपूर्वकं विरेचनस्य पक्षद्वयं समुद्घाटितम्—विरेचनस्य द्वौ पक्षौ, एकोऽभावात्मकः द्वितीयश्च भावात्मकः अभावात्मके विरेचने मनोवेगानामुत्ते-

जनं तेषां शमनं च जायते, ततः मनसः सुशान्तिर्भवति । कलात्मकं भावान्वितं परितोषं च भावात्मके विरेचने सम्भवति । अन्ये भावात्मकं विरेचनं नाङ्गीकुर्वन्ति । ते कथयन्ति यदेतत्विरेचनं दुखान्तरचानास्वेव भवति सीमाबद्धोऽयं सिद्धान्तः पूर्णता रहितश्च अरस्तुमतव्याख्यानिरतैरन्यैराचार्यैः परिपूर्णरूपेण विरेचनसिद्धान्तस्य संस्थापना कृता ।

## अनुकृतिसिद्धान्तः

पाश्चात्य साहित्यशिरोमणेः—अरस्तुमहाभागस्यानुकृतिसिद्धान्तः सर्वोत्कृष्टतमः, स हि स्वीकरोति यत्सर्वकलानां मूलाधारशिलानुकृतिरेव । भारतीय काव्यपरम्परामाश्रित्य तस्य काव्यलक्षणमेवं भवितुं शक्यते यत् 'काव्यस्यात्मानुकृतिरेव' अनेनानुकृतेर्माध्यमविधानविषयाश्च विस्तरेण प्रपंचिताः । यद्यपि विभिन्नकलानां मूलाधारभूतानुकृतिरेव भवति किन्तु विभिन्नाधारेण तासां कलानां परस्परं पृथक्पृथग्रूपेण विभेदो जायते । अरस्तुः काव्यस्य मानवजीवनेन सह घनिष्ठः संबंधः इति स्वीकृतवान् । काव्ये कलासु च यथानुकृतिमहत्वं प्लेटो महाभागः प्रतिपादयति तथैव अरस्तुः अपि महत्वमङ्गीकरोति । परञ्च द्वयोरेवानुकरणविषये महदन्तरं प्रतीयते । अत एव द्वयोरेवकाव्यसम्बन्धिविचाराः विभिन्नाः संजाताः । प्लेटोमतमस्ति यद् यथार्थप्रत्यंकनमनुकरणं भवति । कवेरनुकार्यः (नायकः) स्वयं सत्याद्दूरतरोऽनु-

कृतश्च। अरस्तु मतेऽनुकरणस्य भिन्नोऽर्थः यथा-काव्यकलासु च प्रकृतेः सृजनप्रक्रियाया अनुकरणं विधीयते। सृजनात्मकं साहित्यम् नीतिप्रधानोपदेशात्मकसाहित्याद् विभिन्नं तत्रानुकरणमेव भेदकं तत्वम्। स्काटजेम्स महाभागेन निगदितं यद् अरस्तुः जीवनस्य जीवन्तं चित्रणमनुकरणमिति स्वीकरोति ।

१. कलासु-अनुकृतिमहत्वम्—यथा संगीते लयस्यसामंजस्यस्य, नृत्ये च लयस्य महत्वं भवति तथैव काव्येऽनुकृति–साधनं भाषा भवति। गद्येन पद्येन वा भाषाप्रयोगो विधीयते। सामान्यजना अनुकृति तत्वं विहाय छन्दोबद्धमात्रं काव्यं स्वीकुर्वन्ति नोचितमेतत्। तेन स्पष्टतया लिखितम्—काव्यस्य कृते भौतिकशास्त्रेभ्यः पृथक् स्वरूप धारणाय छन्दसः प्रवृत्तिर्न सामर्थ्यवती। काव्यतत्वस्य प्राणप्रदा शक्तिस्तु-अनुकृतिरेव। अनुकृतिप्राणा गद्यात्मिका पद्यात्मिका वा कापि रचना काव्यस्वरूपाधायिका भवितुं शक्यते ।

२. अनुकृतेर्विषयाः—अनुकृत्याधारेन अरस्तुः काव्यस्य भेदद्वयं चकार—

१. त्रासदी काव्यम्, २. कामेडी काव्यम्।

त्रासदी काव्यस्य लक्ष्यं वस्तुतः भव्यतरस्वरूप चित्रणं भवति। कामेडी काव्यस्य लक्ष्यं हीनतरस्वरूपचित्रणं

भवति। एवं प्रकारेणकथयितुं शक्यते यद् या नाट्यकृतिर्यथार्थभावात् श्रेष्ठतरा भवति यत्र करुणत्रासभावयोः समावेशः जायते सा हि कृतिः त्रासदी भवति। यत्र हास्यस्य प्राधान्यं भवति सा कामेडो रूपेणोच्यते। अरस्तुः त्रासदीकाव्यं कामेडोकाव्यात् श्रेष्ठतरमिति मन्यते यतोहि त्रासदी काव्येऽनुकरणस्य प्रधानता भवति। नटादयः नाटके मूलनायकस्य (अनुकार्यस्य) चरित्रं चेष्टादिकं चानुकुर्वन्ति।

३. अरस्तुः काव्यविवेचनेऽनुकरणस्य महत्वं कतिपयैर्विशेषैर्हेतुभिः प्रददति-यथा—

(क) प्लेटोः अनुकृतिव्यापारः दर्शनानुगतत्वेनहीनो व्यापारः परन्तु-अरस्तुः काव्यसम्बन्धो सृष्टि-सम्बन्धो चानुकृति व्यापारमङ्गीकरोति।

(ख) अरस्तु महाभागः प्लेटोसदृशमेव चित्रसंगीतकाव्योपरि सममेव विचारं चक्रे। चित्रकला काव्यं च स्पष्टरूपेणानुकरणात्मकमेवास्ते।

(ग) त्रासदी कामेडी काव्यद्वयेऽनुकरणं भवति परन्तु त्रासदी काव्येऽनुकरणस्य महत्वं वहु भवतीति हेतोः तस्य प्रशस्यं स्वरूपम्।

(घ) ग्रीकभाषायां 'पोयट्स' शब्दः कविपर्याय रूपेण स्वीकृतः

'पोयट्स' शब्दश्य व्युत्पत्यर्थः—कर्त्ता भवति किन्तु अरस्तु महाभागेन कर्त्ता–'पोयट्स'—शब्दस्य प्रयोगोऽनुकर्त्तेति रूपेण प्रयुक्तः।

अनुकृतेर्विधिः—काव्यस्य विभिन्नेषु तत्वेषु अनुकृतस्य विषयस्य तन्माध्यमस्य वा सत्यपि साम्ये रीतिनां (शैलीनां) च विभेदो भवत्येव। अरस्तु महाभागः सामान्यरूपेण तिस्रः शैलीः प्रतिपादितवान्।

१. यत्र कविः स्वविषयवर्णणं स्वत एव करोति–-अथवा काव्यनिवद्धवक्तृमाध्यमेन कथयति शैलीयं प्रबन्धात्मिकेति कथ्यते।

२. आरम्भादवसानपर्यन्तमेक रूपेण वर्तनं शैलीयमात्माभिव्यंजकेति चोच्यते।

३. यत्र कविः दूरे सन् नटादीन्प्रस्तोतीति नाट्यशैली काव्य-—कलासु चानुकृतेर्महत्वम्–

अनूकरणं कलायाः मूलाधारः अतोहि–

१. कविर्यस्यानुकरणं करोति स अनुकार्यः।

२. अनुकरणस्य माध्यमम्– परस्मिन्ननुकरणस्याभिव्यक्तिर्जायते।

३. अनुकरणमाध्यमान्तर्गता अनेके प्रभेदाः सन्ति । अत्र काव्यस्यप्रकरणं विद्यते अतोहि–अनुकार्यो नायकः क्रियाशीलोऽनुकरणस्य माध्यमः । भाषालयस्वरयोः सामंजस्यं च काव्यस्वरूपभेदे कारणम् , ट्रेजडी कामेडीमहाकाव्यगीतिकाव्यानि च काव्यस्य प्रभेदाः ।

अनुकार्यस्य त्रिस्त्रोऽवस्थानुकरणीया भवन्ति—

(क) मानवस्यादर्श रूपेणानुकरणम् — ट्रेजडी काव्ये सम्भवति ।

(ख) मानवस्यनिकृष्ट रूपेणानुकरणम् — कामेडी काव्ये विलोक्यते ।

(ग) मानवस्य यथार्थरूपेणानुकरणम् ।

एवर क्राम्बीमतानुसारम् – अरस्तु पारिभाषिक रूपेण ( तकनोकेन ) अनुकरणशब्दस्योपयोगः काव्यसमीक्षायां कृतवान् । काव्यक्षेत्रे कविक्रियया सह सम्बद्धोऽयं शब्दः । अनुकृतिशब्देन कवेरनुभूति, प्रेरणाभावाश्चद्योतिताः भवन्ति । अनुकृतिप्रक्रियया कविः स्वानुभूतिमभिव्यंजयति । अरस्तु कथनमेतत्सारगर्भितं वर्तते—यदनुकरणात्मकं तत्वमवाप्य कविः—सत्कविर्भवति ।।

अरस्तुः काव्येऽनुकरणस्य सर्वाधिक्यं महत्वं संप्रतिपाद–

यन्निगदति – यत्काव्यसृजनप्रक्रियायां तदास्वादने च मूला-धाररूपेणानुकृतिरेव मूलकारणं भवति। काव्योद्भवविषये विचारयन्नसौ लिखति यद् काव्यं-सामान्यतया द्वाभ्यां कारणाभ्यां प्रस्फुटितं भवति । १—अनुकृतिर्नाम-मानवस्य स्वाभाविकी सहजा च प्रवृत्तिः याहि जीवने जन्मकालादेव प्रभवति काव्यस्य मूलकारणमेतदनुकरणम्। २-–काव्योत्पत्ति-विषये लयः सामंज्यस्यं च द्वितीयं कारणम्।

काव्यस्वादनमपि सहृदयेनानुकरणव्यापार माध्यमे नैवानुभूयते। अनुकृतवस्तुना सार्वभौमिकस्यानन्दस्योपलब्धि जायते सचेतसामनुभव एवात्रप्रमाणम् । यैः प्रत्यक्षसाधनैर्जना दुःखमनुभवन्ति तैरेवानुकृमिमाध्यमेन विरचितैः काव्यैचित्रैव सहृदयाः जनाः परमाह्लादमनुभवंति । सर्वो हि जनः ज्ञानार्जन वांच्छतीतिहेतोरनुकृतिः सर्वलोकायानन्दं प्रददाति ।

संक्षिप्ततया—अरस्तु महाभागस्यसिद्धाँतद्वये विरेचनम प्राक्-मनोविकाराणामुत्तेजनं तेषामुपशमनं ततो मनस पराशान्तिरिति विरेचनस्याभावत्मकपक्षः। मनोविकारशम नानन्तरम् परमानन्दलाभश्च भावात्मकः पक्षः। अनुकृतिश्च द्वितीयः सिद्धाँतः। अरस्तुः अनेन सिद्धाँतद्वयेन प्लेटोमहा भागस्य काव्यसम्वंधि समाक्षेपान् निराकरोत्।

पाश्चात्य काव्यसमीक्षायां वर्तमानयुगेऽनुकरण

सिद्धान्तस्य तादृशं महत्वं न वर्तते परन्तु रोमदेशस्याचार्यैर-नुकरणशब्दस्य पारिभाषिकोऽर्थः आसहस्रवर्षं वहुमाने नाङ्गीकृतः। पोयटिक्सं नाम पश्चिमीयसमीक्षाशास्त्रस्य वेदवत् महत्वपूर्णम् ग्रन्थरत्नं वर्तते। काव्यस्यात्मा, कलानां व्याख्या तासां वर्गीकरणम्, ट्रेजडी कामेडी काव्यविवेचनम्, नैतिकरूपेण, कलात्मकेन सौन्दर्यात्मकेन चाधारेण काव्यस्य वैज्ञानिकं समीक्षणं पोयटिक्से वर्तते।



# लौंजाइनसः

## ( ३ )

(ई० प्रथम शतक)

पश्चिम काव्यशास्त्रस्य प्रथमसौन्दर्यवादप्रतिष्ठापकः समीक्षकप्रवरो लौंजाइनसः तस्य चोदात्तवाद निरूपणम्।

पश्चिमकाव्यसमीक्षाचार्येषु प्लेटोअरस्तु महाभागाभ्यामनन्तरं लौंजाइनसमहाभागस्य नाम विशेषरूपेणोल्लेखनीयं वर्तते। यद्यपि लौंजाइनसस्य कालबिषये निश्चयेन किमपि कथयितुं न शक्यते तदपि श्रूयते यदयं पलमीरादेशस्य जिनोवियायाः साम्राज्ञ्या मंत्रिपदे नियुक्त आसीदतोहि प्रथम शतकेऽस्य जन्मसमयः

लौंजाइनस महाभागेन परम्परागतविचार विरोध विधाय-आत्मानुभवाधारेण स्वकीयकाव्यसिद्धान्तानां प्रतिपादनं विहितम्। अस्यानेन दृष्टिकोणेन समालोचका लौंजाइनसं पश्चिमकाव्यसमीक्षाशास्त्रस्य प्रथमं सौन्दर्य समीक्षकमिति स्वीकुर्वन्ति।

'पेरिइप्सु' ग्रन्थस्याध्ययनेन प्रतीयते यदस्य लेखकः श्री लौंजाइनसः सन्नपि परम्परागतशिक्षानिष्णातः स्वयुगस्

संकुचितनियमानुलंघ्य स्वच्छन्दतया स्वकाव्यतत्वाभितं समुद्घोषितवान्। तेनहि स्वच्छन्दवादितया काव्ये कल्पनायाः भावानां च महत्त्वं प्रतिष्ठापितम्। अस्य कलाकाव्य सम्बन्धिनीविवेचना पूर्णतो मौलिकी वर्तते। व्याकरणे वक्तृत्वकलायां पंडितोऽपि सन्नसौ साहित्ये रसज्ञशिरोमणिरासीत्। रसज्ञतयासौ काव्यमर्मज्ञेषु विशिष्टं स्थानं लभते। स्वच्छन्दविचारपरायणया धिया लौंजइनसः शिक्षादानमाह्लादावाप्तिर्वा काव्यप्रयोजनत्वेन नाङ्गीकरोति। अस्यमतमस्ति यद् सा सत्याकाव्यशक्तिः यया श्रोता पाठको वा बाह्यजगतो देशकालादिसीमानमुल्लंघ्य भावजगति सन्निमग्नो भवेत्।

लौंजाइनसमहाभावेनोदात्ततत्वशक्तेरूपमा विद्युल्लतया सह कृता, या हि साहित्ये घनान्धकारं विदारयन्ती काव्यतत्वप्रकाशने सक्षमा भवति। प्रतिभायाः महत्वं संप्रतिपादयतानेन सत्यमेव संप्रकटितम्—यदयं कोऽपि सौन्दर्यवादचिन्तने निरतः काव्यशास्त्री वर्तते। अनेन कल्पनायाः-प्रतिभायाः भावोत्तेजनायाश्च महत्वमुद्घोषितम्। अस्मात्पूर्वं काव्याचार्याः शास्त्रीयपद्धतिपाशबद्धा आसन्। समकालीनाश्च वक्तृत्वे शास्त्रीयालंकारचर्चासु च संलग्ना समभवन्। लौंजाइनसस्तु स्वच्छन्दसरणिं समुद्घाट्य यूरोपीय काव्यक्षेत्रे सौन्दर्यवादसंप्रदायस्य पथिप्रदर्शकरूपेण ख्याति लेभे।

लौंजाइनसस्य काव्यसिद्धान्ताः तस्य पेरिइप्सु नामके-

काव्यतत्त्वग्रन्थेनिबद्धा; सन्ति । सम्पूर्णरूपेणायं ग्रन्थः नोपलभ्यते तस्य केचनांशा एवोपलभ्यते । अस्मिन् ग्रन्थे भाषणम् कला:, गद्यकाव्यं, शैलीत्यादि विषयेषु प्रामाणिकाः सिद्धान्ताः संप्रमाणं तादृक् विवेचिताः यथाते खण्डनार्हाः नाभवन् ग्रन्थस्य प्रथमभागे तत्कालीनकाव्यानां साहित्य दोषाणां विवेचनं वर्तते, द्वितीयभागे श्रेष्ठशैलीनां तत्वविवेचनं वर्तते । विषयस्य रूपरेखाया अवधारणम् भावानां प्रखरता, गाम्भीर्यम्, उचितालंकाराणां योजनम्, वाक्यविन्यासस्य समुचितस्वरः, शब्दप्रयोगस्यौचित्यं, श्रेष्ठस्तरीया शैलीत्यादि विषयेषु सविस्तरं विचारो दरीदृश्यते । विशिष्टतत्वानामेषां विश्लेषणं कुर्वता लौंजाइनस—महाभागेन सर्वप्रथमं पाश्चात्य-काव्यक्षेत्रे नैसर्गिकं सार्वदेशिकानां काव्यतत्वानां तादृशं विवेचनं विहितं यन्नावलोकितपूर्वमासीत् । अत एव स सौन्दर्य-वादचिन्तनस्य मार्गदर्शकरूपेण विख्यातिमवाप्तवान् 'पेरिइप्सु' मध्ये लौंजाइनसमहाभागेन कवेः काव्यस्य समाजस्य च विस्तृतं विवेचनं कृतम् । काव्यहेतूनां परीक्षणं समुपस्थापितम् । एवं तेन रचनाकारस्य व्यक्तित्वम्, कल्पनाशक्तेः महत्वम्, प्रतिभायाश्च मूलाधारत्वेन काव्यस्वरूपः सप्रपंचं सुसंस्थापितः ।

उदात्तवादस्य सिद्धान्तः

लौंजाइनस महाभागेन 'औदात्म्यमेव काव्यस्यात्मेति सिद्धान्तितम् -औदात्तस्यायमभिप्रायः 'कवेर्भाव संसारे पाठकस्य

समुत्कर्षणम्' तेन सिद्धान्तितम्—साहित्यं हि पाठकान् आवेग-पूर्णयानुभूत्या नवीनोन्नति पथं नयति यद् हि साहित्यस्य जीवनम्। अयमेवौदात्त गुणः साहित्यस्यान्यगुणेषु महत्तमः। काव्येऽल्पदोषेषु सत्सु अनेनौदात्तगुणेन काव्यस्यमहत्वं न हीयते। साहित्यं तु औदात्तगुणेनैव संप्रतिष्ठां लभते।

कविना उत्तमोत्तमकाव्ये तया शैल्या व्यवहृर्तव्यम् यथा पाठकः पार्थिवजगत उपरि उत्थाय भावजगति हर्षोन्मत्ततया स्वात्मानमपि विस्मृतिपथं नयेत्। स्वात्मविस्मरणेनैवातीन्द्रियानन्दोपलब्धिर्भवितुं शक्यते। कविरचनायामयं गुणः प्रतिभायाः कलानां च समन्वितसंयोगेनैव भवितुं शक्यते। जनजागरणम्, प्रबोधनम्, शिक्षाप्रदानम्, नैतिकोपदेशादि वा नास्ति काव्योस्योद् देश्यम्।

The Sublime consists in a certain loftiness and consumatcness of language and it is by this and this only that the greatest poets and prose wntess have won Pre-eminence and lasting bame.

औदात्यम्—रचनायाः वर्ण्यविषये तन्माध्यमे कृतिकारे च सम्भवत् काव्यविषयं सहृदयसंवेद्यं विदधाति।

१. अभिव्यक्तेरुत्कृष्टता–एवौदात्यम्।

२. औदात्यं नाम पाठकजनं पूर्णरूपेण वशीकरणम्।

३. औदात्येन पाठको हि – आत्मविस्मृत्यवस्थामनुभूय अद्भुतानन्देन परिवेष्टितो जायते ।

अत एव सच्चरित्रवान् प्रतिभान्वितो यशस्वोजन एव-उदात्तकाव्यनिर्माणे सक्षमो भवितुमर्हति, यतोहि आत्मनः समुत्कर्षस्य प्रतिबिम्बनमेव—औदात्तम् । यस्य जीवनं तुच्छेषु संकीर्णेषु विचारेषु व्ययीभवति स हि मानवजीवनस्य कृते किमपि स्थायि काव्यनिर्माणं कर्तुं न पारयति । निश्चितमेतत् यद् यस्य मनः मष्तिष्कं वा उदात्तधारणाभिः परिपूर्णं भवति तस्य वाग् उदात्तैः शब्दझंकृतैर्गुञ्जिता भवति ।

लोंजाइनस महाभागेन उदात्ततासम्पादनार्थं काव्ये-निम्नाङ्कित पंचगुणानां परमोपयोगिता प्रतिपादिता ।

१. वस्तु बोधस्य विचाराणां च भव्यता ।
२. भावानामुत्कृष्टत्वं सघनत्वं च ।
३. अलंकाराणां समुचितः प्रयोगः ।
४. शब्दशिल्पस्योदात्तत्वम् ।
५. शब्दानामुत्कृष्टव्यवस्थापनम् ।

उपर्युक्तेषु गुणेषु प्रथमद्वितीयौ कवेः स्वाभाविक्या प्रतिभया तृतीयचतुर्थपंचमाश्च कवेः काव्यकलया समुद्भूयन्ते । एवं काव्ये हि प्रकृतिकले द्वे समानं महत्वं धारयतः । उक्तपंच गुणाः काव्ये औदात्योत्पादनाय प्रमुख हेतवः सन्ति काव्यस्य-भावपक्षे कलापक्षे चैते गुणाः सन्तः काव्यस्य सत्स्वरूपं प्रख्याप

यन्ति। एतेषां गुणानां विरोधिभूताः पदार्थाः काव्ये सर्वथैव परित्याज्याः। अत एव काव्ये भाषा-अव्यवस्था, प्रभाव-हीनता, उक्तेः संक्षेपः, अस्पष्टत्वम् , आडम्बरभरिता शैली, अभिव्यक्तेः क्षुद्रत्वम्, ग्राम्यपदप्रयोगः, कर्णकटुपद प्रयोगः, नीरसत्वादिकं च सर्वथैव वर्जनीयम्।

१. वस्तुबोधस्य विचाराणां भव्यता—

लौंजाइनस-महाभागस्य मतमिदं यत्काव्ये विचाराणा-मौदात्तम् परमावश्यकं वर्तते। विचाराणां श्रेष्ठता प्रायशः प्राकृतिकमुपदानं भवति। श्रेष्ठविचाराणामभिव्यक्तिः स्वाभाविक रूपेणोदात्तशैलिमाध्यमेनैव जायते। 'उदात्त-कथनमात्मनो महत्वस्य प्रतिध्वननमेवास्ति' यद्यपि प्राकृतिक-मिदमात्मनो महत्वम किन्तुसततचिन्तनेनाभ्यासेन वापि समुपर्जितु शक्यते। एतदर्थं महता साहित्यकाराणां कवीनां काव्यस्य पौनः प्पुन्येनानुशीलनमावश्यकम्।

२. भावानामुत्कृष्टत्वम् सघनत्वम् च

लौंजाइनस महाभागेन निगदितं यत्समयोचितः सद्भावावेगः काव्ये यादृशीं शोभातिशायितां समुत्पादयेत तादृशी शोभा न केनाप्यन्येन हेतुना सम्भव्या यतोहि सम्भावा-वेगः प्रबलप्रबेगैः शब्देषु प्रेरणातत्वं परिपूर्य तान् शब्दान् दिव्यावेगभरितान् करोति तत्काव्यमुत्तमोत्तमं भवति यत् पौनः पुन्येनपाठकान् उत्तेजयति समुद्वेलयति च।

### ३. अलंकाराणां समुचितः प्रयोगः

लौंजाइनस्य कथनमेतत् यत्काव्येऽलंकाराणां प्रयोगः यान्त्रिकरूपेण न करणीयः । स्वाभाविक रूपेण सहजतया- शैलिमध्ये चमत्कारसम्पादनाय साधनरूपेणालंकारा प्रयोक्तव्याः । अलंकारस्तु तस्मिन्स्थलेप्रभापूर्णः संजायते यत्रालंकारालंकार्ययोरभेदः स्यात् । अतोहि—अलंकाराणा प्रयोगे स्थानस्य रीतेरभिप्रायस्य परिस्थितीनां चाकलनमावश्य कम् भवति । अलंकाराणां प्रयोगे संयमस्यावश्यकता सततोऽवधेया ।

### ४. शब्दशिल्पस्योदात्तता

वस्तुत सुन्दरशब्दा एव विचारेभ्यः सौन्दर्यं प्रददति यत्र तत्र यदा यदा वा भावोदात्तत्वम्, भव्यत्वम्, तीव्रत्वम् सौन्दर्यम् वा भवति तत्र तत्र शब्दचमत्कारस्य सहयोगोऽनि वार्यरूपेणोपलभ्यते । समुचिताः शब्दाः निर्जीवविचारमपिस जीवमिव सम्पादयन्ति । शब्दप्रयोगः प्रकरणानुगतत्वेनेवौ चित्यवान् भवति ।

### ५. शब्दसंघटनम्

अस्मिन्विषये लौंजाइनसमहाभागेन संक्षिप्ततयं विलिखितम्-शब्दानां संगतिपूर्ण संघटनमौदात्तस्य कृते निता मावश्यकम् ।

लौंजाइनसमहाभागस्यावदानम् ।—

लौंजाइनसः व्याकरणस्य दर्शनस्य साहित्यालंकारशास्त्रस्य चाद्वितीयः पण्डित आसीत् । 'पेरिइप्सु' ग्रन्थरत्नमस्य वैदुष्यं संप्रतिपादयति, अस्मिन् ग्रन्थे सारल्येन सरसतया च प्रतिपादिताः काव्यसम्बधिनो विचाराः महत्वपूर्णाः सन्ति । पाश्चात्यकाव्यसम्बन्धिशास्त्रेषु 'पेरिइप्सु' ग्रन्थस्यमहत्त्वपूर्णं स्थानं वर्तते । लौंजाइनसः पूर्ववर्तिप्लेटोअरस्तु महाभागयोः सिद्धांतानात्मसात्कृत्वा काव्ये औदात्तस्य महत्वंसर्वोपरि वर्तते मतमिदमुद्घोषितवान् । अस्य मतं परवर्तिसमालोचकानामचार्याणां च कृते प्रेरणाप्रदं संजातम् ।

# रोमनकाव्यशास्त्री
## – होरेसः –
## ( ४ )
### ( ६५–०८ ई० पू० )

पाश्चात्य काव्यसमीक्षाशास्त्रे होरेसमहाभागस्य योगदाम्

रोमीयसमालोचकः होरेसः (६५–०८ ई. पू.) स्वकीये ग्रन्थे 'आर्स पोएटिका' मध्ये काव्यनाट्यौचित्यसम्बन्धिमत निजदाद। असौ हि व्यावहारिकदृष्ट्या काव्योपरि विचार चकार। अरस्तु मतमनुसरन्नसौ कथयति यत् – जीवनस्यानु-करणमेव काव्यम्। नाटकं तु पूर्णतया जीवनस्यानुकरणम् वर्तते। अनुकरणमेतत् न पुनरावृत्तिः किन्तु पुनः सृजनम् (Re-creation) वर्तते।

एतदतिरिक्तम्—कविः स्वप्रतिभाबलेनापि काव्यम् करोति। अत एवासौ काव्यकारणं विवेचयन्निगदति-यत् कविरन्तर्दृष्ट्या शास्त्रज्ञानेन च काव्यनिर्माणं करोति। अन्तर्दृष्टि माध्यमेन प्रतिभायाः शास्त्रज्ञानेन चाभ्यास शास्त्राध्ययनयोः समावेशः काव्यकारणेषु स्वीकरोति—

'For my Part I fail to see the use of study with

or without training : So true is it that each other are in helpful union.

प्रतिभया विनाध्ययनम्, अध्ययनेन विना प्रतिभा वा काव्ये किमपि कारणं न भवतः। काव्ये द्वयोरेव समं महत्त्वम्। होरेसमते काव्यस्योद्देश्यम्—सदुपयोगः, आह्लादश्च। यस्मिन्काव्ये उपयोगिताह्लादयोः संश्लेषणं भवति तदेव सत्काव्यम्। काव्यमुदात्तम् दूषितं चेति द्विविधम् उत्कृष्ट काव्यस्य कृते सहजा विवेकशक्तिः सच्चिन्तनं च परमावश्यम् The secret of all good writing is sound judgement.

काव्यं हि शिवं सुन्दरं रसान्वितम् भवति। सरलेन सुसंगठितेन काव्येन पाठकमनसोऽनुरंजनम् जायते। काव्ये शब्दाडम्बरस्य विरोधी सरलशैलिसमर्थरूपेण विख्यातः होरेसः-काव्यस्यारम्भमध्यान्तभागेषु संगतिमन्विति चानुमोदयति।

## काव्यस्य वर्गीकरणं

काव्यम् द्विविधम्-श्रेष्ठकाव्यम् हीनकाव्यम् च। प्रकारान्तरेण - व्यंग्यकाव्यम् प्रहसनं चेति। व्यंग्यकाव्यस्य प्रयोजनं तु सामाजिक दोषाणां निराकरणम्। तर्केण यत्कार्यं न सम्भवति तत् व्यंग्यकाव्येन संपद्यते। व्यंग्यकाव्यस्य पात्राणां हास्यं तु शिष्टं मधुरं सद्वृत्तिप्रेरणाप्रदम् भवति।

प्रहसने तु एषामभावस्तत्र तु मात्रं मनोरंजनम् विलोक्यते।

## काव्यशैली

शैल्यास्त्रयो गुणा: भवन्ति—

१. उपयुक्त शब्द चयनम्।

२. सशक्ता संक्षिप्ता चानुभूतिः।

३. स्पष्टता।

काव्ये शब्दानां कौशलेन सुरुचिपूर्ण संयोजनं विधेयम् वागाडम्बरः न करणीयः। स्पष्टता तु तस्य परमोगुणः यं विनाह्लादस्योत्पत्तिनजायते। असौ छन्दसां प्रयो जागरुकः। महाकाव्ये षट्पदा, दुःखविषये करुणगीत (Elegy), व्यंग्ये व्यंग्यम् (Satire), कामदीत्रासदो का द्विमात्रिक छन्दः, विजयगीते सम्बोधनगीतम् (Ode) प्रेमगी विरहाकाव्ये च गीतिः 'Lyric) प्रयोक्तव्या।

## औचित्यसम्बन्धिविचारा

होरेसः काव्यस्य सर्वविधासु सर्वाङ्गेषु च औचित्य महत्वं प्रतिपादयति।

## विषयौचित्यम्

परम्परागतसिद्धान्तान्तनुसरणं कुर्वता कविना परम

रागतकथावस्तु मध्ये नवीनोद्भावनं विधेयम् । कविः स्वसीमायां सामर्थ्ये च समागतं विषयं काव्ये समानयेत् । परिचितेऽपि कथानकस्य तादृशा अंशाः परित्याज्याः यैः कलात्मिकाभिव्यक्तिर्न जायते ।

## चरित्रौचित्यम्

पात्रचरित्रचित्रणे यथास्थितया व्यवहर्त्तव्यम् पारम्परिके पात्रे तदनुरूपव्यवहारः, वेशविन्यासः वथनोपकथनादिकम् विधेयम् । कविना चरित्रचित्रणे पात्रस्य कार्यम् तद् रुचिः तस्य वयोऽवस्थादय औचित्येन प्रतिपादितव्याः ।

## अभिनयौचित्यम्

नाटके पात्रस्याङ्गसंचालने कथने मनोदशायां स्थितौ च सामंजस्यावश्यकता भवति । शोकग्रस्तस्य पात्रस्य मुखाद् दुःखपूर्णाः- क्रुद्धस्य मुखाद्रोषपूर्णाः, सुखिनः मुखाद् परिहासपूर्णाः शब्दा एव समुचिताः भवन्ति ।

## घटनौचित्यम्

काव्ये नाटके च घटना तादृशी समुचिता यस्यां पात्रस्य प्रसंगस्य-वस्तुनश्च सजीवं चित्रणं स्यात् । अत एव हास्य-करुणयोः समन्वयकरणमनुचितम् ।

भाषौचित्यम्

काव्ये भाषा सरला स्पष्टा चापेक्षिता भवति, शब्दा डम्बरेण कृत्रिमभावेन च भाषाविकृता संजायते। कर्णकटु-ग्राम्यदुरुह शब्द प्रयोगः काव्यतत्वं नाशयति। काव्ये शब्द संयोजनं कुशलतया कार्यम्। विषयानुगतः प्रसंगानुकूलश्च प्रसादौजोमाधुर्यगुणप्रयोगो निवेशितव्यः तदनुकूलश्च छन्दः प्रयोगो विधेयः। होरेसमहाभागस्य कथनम्—यद्यहं काव्य-परम्परानानभिज्ञः, तन्नियमपरिपालने चाक्षमस्तदा मम कवि-पदस्य कोऽधिकारः ?

होरेसस्यौचित्यसिद्धान्तः कृतीनां समग्रां व्याख्यां प्रस्तौति औचित्याधारेणैव काव्यस्य साफल्यं भवति। भारतीय काव्येऽपि श्रीमतानन्दवर्द्धनेन निगदितम्—

'अनौचित्यान् ऋते नान्यद् रसभंगस्य कारणम्।
औचित्योपनिबन्धस्तु रसस्योपनिषत् परा॥'

यद्यपि मुख्यरूपेण होरेसः काव्यस्य वहिरङ्गपक्षे विचारं कृतवान् अनेन वस्तुपरकदृष्ट्या कलापक्षस्य विवेचनं कृतम् पुनरपि निर्विवादमेतत् यत् तत्काव्यसिद्धान्तैस्तत्कालीना परवर्तिनश्च साहित्यकाराः समालोचकाः पूर्णरूपेण प्रभावा-न्विताः जाताः।

होरेसस्यौचित्य सिद्धान्ते द्वौ समाक्षेपौ वर्तेते। एक अभिजात्यवर्गस्याधारेणौचित्यसिद्धान्तो निर्दिष्टो वर्तते तस्यावधानं ग्रीक साहित्ये स्वकीयकाव्य श्रोतृदर्शकवर्गे च सीमितमासीत्।

द्वितीय समाक्षेपोऽयम् वर्तते यदौचित्य सिद्धान्तः वहिरङ्गसमालोचनाया एवाङ्गम्। अनेन काव्यस्य सुव्यवस्थितं मौलिकं पूर्णतात्विक विवेचनम् न जायते। अत एव होरेसस्यौचित्यसिद्धान्तः रूढ़िग्रस्तः संजातः।



# नव्यशास्त्रवादसमीक्षकाः

# पोपः

## ( ५ )

### पोपमहाशस्य सिद्धान्ताः-

नव्यशास्त्रवादीय समालोचकानां मध्ये पोपमहोदयस्य महत्वपूर्णं स्थानं वर्तते। अस्य काव्यसम्बन्धिनो विचाराः 'एसेज आन क्रिटिसिज्म (Essays on criticism) मध्ये निवद्धाः। अस्य ग्रन्थस्य त्रयो भागाः सन्ति। प्रथम भागे-अरस्तू महाभागस्यानुकरणसिद्धान्तेनाधारिताः विचाराः सन्ति। द्वितीय भागे प्रतिभाविवेचनम्, तृतीये च समालोचकगुणानां वर्णनं वर्तते।

### समालोचनामहत्वम्-

'एसेज आन क्रिटिसिज़्म' ग्रन्थे तेन समालोचनाविषये विचारः कृतः। समालोचकस्य गुणदोषाः विवेचिताः। रस-बोधानुसारेणविभिन्न समालोचकानां विचारेषु विभेदो जायते। यतोहि सर्वेषां चेतसि-नैकरूपेण रसबोधो भवति। अतः य कविः प्रतिभान्वितः समालोचनशक्तिसम्पन्नो भवति स साहित्यस्य नवीनोन्मेषं सत्समालोचनं च कर्त्तुं क्षमः।

समालोचकेऽप्यपेक्षित ज्ञानं परमावश्यकम् । समालोचनायां पूर्वाग्रहः नोचितः कस्यापि पक्षस्य समर्थनं खण्डनं वापि नोचितम् । याथार्थ्येन कस्यापि कृतेर्विवेचनमेव समालोचकस्य मुख्यं कार्यम् ।

## कविसमालोचकयोः क्षेत्रम्-

काव्यनिर्माणं कवेः कार्यम् । समालोचकस्य कार्यं तु ततकाव्यविवेचनं भवति समालोचकस्य कार्यमधिकं महत्वपूर्णम् । समीक्षकेण दोषपूर्णं समीक्षणं न विधेयम् । अन्यथा कविसमीक्षकावुभावपि दोषभाजौ भवतः । समालोचकेन तु काव्यस्याविकृतं मूल्यांकनं विधातव्यम् । सामान्यपाठकास्तु समालोचनाधारणैव काव्यविषये स्वकीयां धारणां स्थिरीकुर्वन्ति । सदोषा समालोचना समाजेऽनुचितां भ्रमपूर्णां धारणां जनयति ।

## समालोचकस्य गुणाः—

समालोचकेनात्मविश्वासवता भाव्यम् । किन्तु स्वप्रतिभाजन्यविवेचनमेव सत्यमिति न निर्णेतव्यम् । समालोचकेनान्यविचाराणां मतस्याध्ययनमननमपि विधेयम् तेन सत्समालोचके परिपक्वज्ञानोदयः समुत्पद्यते । पोपः स्वीकरोति यत् समालोचकः काव्यस्य मूल्यांकनं भावपक्षमाधाय विदध्यात् ।

समालोचकेन निम्नाङ्कितनियमानुसारं काव्य-

विवेचनम् विधातव्यम्—

१. प्रवृत्तेः जीवनस्य च नियमानुसरणम् ।

२. अभिमानपरित्यागः

३. कवेः भावोद्देश्यज्ञानम्

५. रचनाकारध्येयस्यावधानम्

६. श्रेष्ठकाव्यस्य कृते बौद्धिकं ज्ञानम्

७. सच्छन्दाः काव्यशैली—एव न प्रशस्ता

८. विभिन्नस्थलेषु समायोजिता विभिन्ना शैली

९. कलायाः समालोचने भाषाविचारो नावश्यकः

१०. स्वातंत्र्येण विवेचनम्

११. साम्येनालोचनम्

१२. प्राचीन नव्ययोर्मध्ये भेदाभावः

१३. अतिशयोक्तेरनुसन्धानम्

१४. नियमपारतान्त्र्येणबुद्धिवलेन ज्ञानाहंकारेण वा सत्यस्य मनुष्यत्वस्यवानावहेलनम् ।

१५. केवलं नवमेवावद्यं न, पुराणमपि प्रशस्तम् ।

पोपमते समालोचकस्य मुख्यं कार्यं जनसामान्यमार्ग-दर्शनाय काव्यस्योत्कृष्टत्व सम्पादनमस्ति । काव्यस्यसहयोगित्वं हि समालोचनम् । काव्य वस्तुतत्वं समुद्घाटयता समालाचकेन सामान्य सहृदयस्य कृते काव्यम् सुगमं सुबोधं च विधीयते । पूर्वाग्रहग्रस्तः समालोचकः कदापि कस्यापि-काव्यस्य सम्यग्विवेचनं न विदधाति । पोपः प्राचीनां शुष्क-

नियमनिगडितां काव्यमीमांसामपि निषेधयति । प्राचीन लेखकानां विचारस्थितिदेशकालगुणादिविषयाणां सम्यग् विवेचनं कृत्वा समालोचकेन स्वविचाराः समाजे संस्थापिताः समुचिताः भवन्ति ।

काव्यम् -

पोपः काव्ये परम्परानुगतां स्थितिं निषेधयति अन्धानुकरणं हि-काव्यस्य बाधकं तत्वम् । कविरनिर्वचनीयसौन्दर्यस्य कृते प्रयत्नवान् स्यात् । सौन्दर्यान्वितं काव्यं समीक्षकेण न विनिन्द्यते । काव्यं हि प्रकृतिरिव मानवमानसं प्रभावान्वितं करोति । यदा कदा तु प्रकृत्यपेक्षया कवितायाः मानवमनसि महान प्रभावो जायते । सर्वः कविजनः स्वभावनाधारेण काव्यस्य सर्वोत्कृष्टं स्वरूपं सम्पादयति यदि तस्य कृतौ प्रभावोत्पादकत्वम्, पूर्णविधानम्, सत्यं च भवेत्तदातत्काव्यं कलाकारं यशसान्वितं विदधात्येव ।

पोपः काव्येछन्दसां प्रयोगोऽनिवार्यं इति न स्वीकरोति, नास्ति छन्दः काव्यस्य निकषम् । अनावश्यक छन्दः काव्यस्य प्रवहमानत्वं विघातयति काव्ये तादृशंछन्दः समुचितं येन भावाभिवृद्धिः सरसता च सम्पद्यते ।

संक्षिप्य कथयितुं शक्यते यदनेन पोपमहाभागेन समालोचकः काव्यस्य व्याख्याता गुणदोषोद्घाटनकर्त्ता चेति रूपेणाङ्गीकृतः । स हि तटस्थ्येन काव्यस्य विवेचनं कुर्वन् सत्काव्यं जनोपयोगाय-प्रशस्तं विदधाति ।



## जॉनड्राइडनः

( ६ )

( १६१० – १७०० ई० )

काव्यनाट्यव्यंग्यसमालोचनादिसर्वसाहित्यविधा विशेषज्ञो जानड्राइडनमहाभागःश्रेष्ठसमालोकरूपेणाद्य विख्यात वर्तते । अनेन काव्यनाटक प्रहसन कल्पनानुकरणकाव्य प्रयोजनादिविषयेषु स्वकीयाः मौलिकाः विचाराः प्रकटिताः अनेन ग्रीकरोमन-साहित्यस्य गभीरमध्ययनं तथा च यूरोपी शेक्सपीयरबेन-जानसनफ्लैचरादीनां पर्यालोचनं कृतम् अरस्तू होरेसादीनां काव्यसिद्धान्ताः सम्यग् विवेचिताः असौ 'पुराणमित्येव न साधुसर्वंम्' सिद्धान्तेन प्राचीनंभव्यमन सन्नपि नवीनं युगानुरोधं नोपेक्षितवान् यथा—

'It is not enough that Aristotle has sasd. ...............and if he had seen ours, might ha changed his mind.'

ड्राइडन महाभागेन स्वमेधयारस्तुहोरेसवोयलोसदृशा समीक्षकानां सिद्धान्ताः विखंडिता;। फ्रांसीसी नाटकारान भीक्षकानवहेल्य तेषां मतं निराकृतम् । अनेन प्राचीनाप्त चार्याणां त्रासदी सिद्धान्तकथावस्तु, संकलनत्रये शंका समुपस्थ

पिता । असौहि — आधुनिकांग्लसमीक्षायाः जनकरूपेण विख्यातः ।

काव्यप्रयोजनम्-

ड्राइडनसमये काव्यस्य त्रीणि प्रयोजनान्यासन्-शिक्षादानम्, आनन्दावाप्तिः, आत्मोल्लासश्च । ड्राइडनः कथयति यत्-आनन्द एव काव्यप्रयोजनम् ।

अनुकरणकल्पनयोः समन्वयः-

ड्राइडनविचारे-मानवप्रकृतेर्मानसचित्रमेव काव्यम् । कविः स्वप्रतिभया कल्पनया वा मूलवस्तु तादृशं वर्णयति यथा तद्वस्तु सुन्दरं मौलिकं च भवेत् । कविर्नास्ति केवलमनुकर्ता स प्रजापत्यपक्षया नवीनं सौन्दर्यान्वितं कार्य-काव्यं करोति । काव्ये विषयापेक्षया कल्पनाशक्तिरचना चातुरिविवेक शक्तीनामधिकं महत्वं भवति ।

कल्पना सम्बन्धिनो विचाराः-

ड्राइडनेन कल्पना कृते 'फैंसो' शब्दस्य प्रयोगः कृतः । 'इमैजिनेशन' शब्देन सह 'फन्सी' शब्दः साम्यं बिभर्ति । काव्ये कल्पनाया अद्भुतो विलासः समवलोक्यते । काव्ये जीवनस्य चित्रप्रत्यनं यान्त्रिकानुकरणं तु प्रकृतेश्चौर्य कार्यम् । यथा—

Theft from nature, it is not life transmitted by imagination.

कवेः कर्तव्यं तु—स्वान्तर्निहित कल्पना शक्त्या बिम्ब-निर्माणेन सौन्दर्याविष्करणमेव । स काव्ये कथानकं गौणं मनुते । यथा—The Story is the least part of a work. अरस्तूमतो कथानक एव काव्यस्य सर्वस्वमिति मतस्य खण्डनं चकार । यावत्कथा Story कवि कल्पनाधारेण चित्रिता सती कथानक Plot स्वरूपं न धारयति तावन्नास्ति तस्याः किमपि महत्वम् । महाकाव्ये कल्पना चरित्रचित्रणे कृत्य-विवरणें स्थायिभावाविष्करणे विचारप्रस्तुतीकरणे साफल्यमवाप्नोति । कविः कल्पनामाध्यमेन सालंकृतया भाषया यथार्थजगत अप्यधिकं सुन्दरं तत्वं-काव्यं प्रत्यक्षरूपेण समुपस्थापयति यथा कथितमपि केनचित्कविना—

अपारे काव्यसंसारे कविरेकः प्रजपतिः ।
यथास्मै रोचते विश्वं तत्तथा परिवर्तते ॥

काव्यविषयः—

ड्राइडनविचारे-काव्यविषयः समुपयुक्तो भवेत् उचितोपयोगेन बिना उत्तमोत्तमौषधमपि यथा नोपयुक्त भवति तथैवानुपयुक्तेन विषयेण काव्यं निष्प्रभं जायते ।

न केवलंविषय चरित्रमपिगौरवान्वितमावश्यकम् । कविना युगानु–सारेण पाठकानां रुचिमानसिकस्तरावपि काव्येऽवधेयौ ।

एवं ड्राइडनेन काव्यसम्बन्धो पँच विचाराः प्रकटिताः—

१. मानवप्रकृत्या सह काव्यसम्बन्धः ।

२. काव्यं मानवप्रकृतेर्मान संचित्रम् ।

३. चित्रमिदं यथार्थं स्यात् ।

४. चित्रमिदं सप्राणं भवेत् ।

५. काव्यलक्ष्यमानन्दः शिक्ष दानं च ।

नाटकसम्बन्धे विचाराः-

नाटकं नाम जीवनस्य जीवितं चित्रम । नाटके नियमपालनापेक्षया स्वाभाविकजीवनचित्रणमावश्यकम् । करुणहासयोर्मिश्रणेन द्वयोरेवप्रभावो बिवर्धते । नाटके वर्णित-कृत्य चित्रितकृत्ययोर्मध्ये सामंज्यस्यमावश्यकम् । नाटके-नायकश्चरित्रवान् गुणयुक्तः नायिका च पतिव्रता युक्ता भवति । कथोपकनं सालंकृतं काव्यमयं स्यात् । नाटके पद्य प्रयोगेन हर्षोद्रेकः समजायते ।

ड्राइडनः नाटके संकलनत्रयस्य समथक आसीत्—

१. कालान्वितिः (*Unity ot time*)

नाटके कथा समयानुयोगिनी समुचिता भवति । कालान्वितिर्नाटकस्य सकलतायै परमोपयोगनी भवति ।

२. देशान्वितिः (*Unjiy of place*)

नाटकस्य रंगमंचे नानादृश्यानि नानाभ्थलानि नोचितानि भवन्ति यतो हि रँगमंचस्य स्थलमेक एव भवति । एकस्मिन् रँगस्थले विभिन्नदृश्यनां विभिन्न स्थलानां समायोजनं नाटकारस्य महत्कर्म ।

३. कार्यान्वितिः (*Unity of Action*)

स एव महान् कविः यः महतः सम्पूर्णस्य च कथानकस्य सफलनिर्माणे क्षमः । एकस्मिन्नाटके द्वयोः कथानकयोः समावेशः नोचितः यतो हि तेन कार्यान्वितिर्नश्यते । येनोपकथानकेन मुख्यकथानकः पुष्टिमाप्नोति येन च दर्शकानां मनोरंजनं जायते तस्य नाटके समावेशः समुचितः ।

भाषा

ड्राइडनः भाषा विषये विशुद्धांग्लभाषापक्षपरायणो वर्तते । पाण्डित्याडम्बराः विदेशीयाः शब्दाश्चतेन काव्यात्

बहिष्कृताः । अयं बागाडम्बरे वाक्स्फीर्ति विनिन्दयति । कविना पुनरावृत्तौ अतिशयोक्तौ अभिव्यक्तिशैथिल्ये च दोषोद्धाराय प्रयत्नवता भाव्यम् । असौ त्रासदी काव्ये समुदात्तशैलीं समर्थयति ।

ड्राइडनस्यापदानम्

ड्राइडनः प्रथमः समालोचको वर्तते येनांग्लसाहित्यस्य महत्वमुपपादितम् । फ्रांसीसी साहित्यस्य ग्रीकसाहित्यस्य च दोषमुद्घाटयन्नसौ जनसमक्षे—आंग्ल-साहित्यस्य महत्वमुपपादितवान् । ऐतिहासिक्यास्तुलनात्मिकायाश्च समालोचनायाः क्षेत्रेऽस्य स्तुत्यं कार्यं विद्यते । अनेन —

Descriptive Criticism समीक्षणस्याधार शिला संस्थापिता । तेन ते प्रभावाः निरूपिता यैः साहित्ये व्यक्तित्वं निरूप्यते । Fobles प्राक्कथने तेन निगदितम् यत् मिल्टनः स्पैंशरस्य यथार्थः—काव्यमयस्तनयः यतोहि-कवीनामपि जाति परिवार वंश परम्परास्तादृश्यो भवन्ति यादृश्य अन्य जनानाम्' अनेन कथनेनासौ काव्ये कविपरम्पराऋणाधमर्णतां स्वीकरोति । पुनरपि जानड्राइडनः कस्याप्यन्धानुकरणं न करोति तेन-अरस्तू होरेसेबोइलो सदृशानाम् महतां समीक्षकाणां मतानि विखण्डितानि ।

साहित्यस्य मुख्योद्देश्यः आनन्द एव शिक्षादानं तु गौणं वर्तते कलापूर्णे नैतिके च काव्ये महदन्तरं भवतीति प्रतिपादितम् । काव्ये सौन्दर्यं महत्वपूर्णं तत्वम् नास्ति काव्यं मात्रमनुकरणं तत्तु पुनः सृजनमित्यनेन कल्पनातत्वमुपपादितम् । अत आंग्ल साहित्य समालोचनायां जानड्राइडन-महाभागस्य महत्वपूर्णं योगदानं वर्तते ।



# डा० जानसनः

( ७ )

( १७०९ – १७८४ ई० )

डा. जानसनमहाभागो हि नव्यशास्त्रवादस्वच्छन्दतावादसंघर्ष युगे समभवत् । मैथ्यू आर्नाल्डेन कथितम्-यदयं डा. जानसनः परम्पराशास्त्रवादयोः प्रबलसमर्थक आसीत् नायं पूर्णतः नवशास्त्रवादी समीक्षकः। अनेन नवशास्त्रवादस्य बहवः सिद्धान्ता अवहेलिताः । कलासम्बन्धे तस्य मतम् नव्यशास्त्रपरम्पराविरुद्धं वर्तते असौ रोमान्टिकविचारधारया समं पूर्णतः साम्यं न बिभर्ति । अनेन काव्यस्य त्रयोगुणाः स्वीकृताः । काव्ये-साम्यम्, यथार्थम्, नैतिकं गुणं भवेदिति । कलाजीवनेन सह घनिष्ठरूपेण सुसम्बद्धा । तेन कथितम् ।

The legitimate end of fiction is the canveyance of the truth.

तद्विचारे–उपन्यासकारः मानवाचरणस्य यथार्थानुकरणं करोति । पारिवारिकत्रासदी काव्यं वरं यतोहि-तत्काव्यमस्माकं हृदयं स्पृशति भावोद्वेलने च तत् क्षमं भवति । डा. जानसनो वांच्छति यत् कविः स्वेनानुभूतं भावमेव काव्ये

निवेशयेत् तदैव तत् प्रशस्तं काव्यं भवति। अवास्तविकानु भूतिः काव्यदोषो जायते। स तानप्युपहसति ये सौन्दर्यमन वलोक्य तस्य प्रशंसां कुर्वन्ति। ये च ईर्ष्यामननुभूय ता निन्दन्ति। सारांशोऽयं वर्तते यदसौ सत्यं कलायाः मूलमिति स्वीकरोति। अत एवानेन रोमान्स रूपककाव्य गीतकाव्यो पन्यासविरोधे स्वमतं प्रकटितम्।

डा. जॉनसनः काव्ये नीत्युपदेशागां प्रवलसमर्थको वर्तते।

It is always a writers duty to make the work better.

मानवजीवनोत्थाने प्रकृतेर्यान्यङ्गानि सफलानिभवन्ति काव्ये तेषामेवानुकरणं कर्त्तव्यम् यानि खलपात्राणि दर्श श्रोतारं वा पतनोन्मुखं विदधति काव्येऽसौ तेषां विरो करोति। नीतिसिद्धान्त पोषकः डा. जानसनः 'काव्यग न्यायस्य समर्थको वर्तते। काव्यगतन्यायस्य दुराग्रहे समर्थनं न करोति यतोहि स सत्यस्य यथार्थस्यापि समर्थक वर्तते। तेने स्वकोये ग्रन्थे Liues कथितम्—

Since wickedners often prospers in real life the poet is certainly at liberty to give it prosperity on the stage.

साहित्ये केवलं प्राचीनलेखकानामनुकरणं

विधातव्यम् । सार्वभौमप्रकृतेराचरणानां च प्रत्यंकनं ( Representation ) काव्ये विधातव्यम् , तस्यमतमस्ति यत् मानवप्रकृति, सर्वत्रैव समाना भवति । तेन काव्येऽभिव्यक्ति वस्तुन्योर्द्वयोरेव समं महत्वमुपपादितम्' डा. जानसनस्य सावभौमिकसिद्धान्तेन सह समसामयिकवास्तविकजीवन-चित्रणसम्बन्धिसिद्धान्तो ह्यापाततो विरुद्धयते, तेन द्वयोरेव सिद्धान्तयोश्चित्रणमुपपादितम् । परन्तु गम्भीरानुशीलनेन विरोधाभासो निवर्त्यते । स काव्ये सव्यं प्रत्यंकनं Just Representation स्वीकरोति । Just शब्दार्थः सत्यं नीतिपूर्ण मित्यर्थे प्रयुक्तः तदा तस्य त्रयः सिद्धान्ता समन्विताः जायन्ते । यतोहि सामान्यप्रकृतेः प्रतिफलनं यथार्थान्वितं नैतिकं च भवति । सवसामान्यं नैतिकम् । काव्ये व्यक्तिविश्लेषणं न कर्तव्यम् जातिविश्लेषणमेवोचितम् । कविः सार्वभौम-गुणान् सामान्य.न् काव्ये समुपस्थापयेत् ।

तात्विकरूपेण डा. जानसनस्य कथनेषु विरोधोनास्ति । तेन काव्ये नीतिसार्वभौम यथार्थेति तत्वत्रयस्य समन्वयः समुत्पादितः ।

परम्परागत काव्यनियमान्धानुकरणस्य विरोधं कुर्वता तेन प्रतिभावैशिष्ट्यमधिकं सम्मानितम् । आलोचनाशास्त्रस्य कृते तु केचन नियमा आधारभूताः अपरे च लाभदायकाः भवन्तीति तेनाङ्गीकृतम् ।

नाटके कार्यान्वितिः समुचिता सती स्वीकृता भवति। तेन देशान्वितिः कालान्वितिश्च नाङ्गीकृता।

भाषा -

भाषा विषये जानसनः नव्यशास्त्रवादानुसारं प्रवर्तते। अधिकाधिकगरिमा पूर्णा सालंकृता भाषा काव्ये समुचिता भवति। बागाडम्बरो भारभूतालंकारनिवेशश्च दोषभाक् भवति। विषय-वस्तु पात्रकाव्यविधाधारेण भाषा प्रयोगः कर्त्तव्यः। त्रासदी काव्ये भव्या सालंकृता, साधारणविषयेषु च साधारणनिरलंकारा भाषा प्रयोक्तव्या।

भाषा सौन्दर्येण छन्दोमाधुर्येण काव्यगत सौन्दर्यं विवर्धते अतः काव्ये छन्दसः संगीतस्य च महत्वं भवति।

मौलिकताकल्पनाआविष्कारशक्तेरभिप्रायः — काव्ये नवीनघटनाक्रमस्य सृजनम्, नवीन पात्राणामवतरणम् प्रसादान्त-रचनाक्षमत्वम् वर्तते। कल्पनाभिप्रायः—स्वाच्छन्द्यम्, दिवास्वप्नः पलायनम्, ऐन्द्रियविम्बनिर्माणम् नास्ति तस्य कल्पनापरिभाषेयं वर्तते।

Imagination selects ideas for the treasures o remamberance and producer novelty only by th varied combination.

कल्पनायां यथार्थप्रत्यंकनमेवोचितम्। निरर्गलभावे कल्पना समुचिता न भवतीति प्रतिपादितम्। काव्ये धा

विचार: नोचित:, ईश्वरयिनिर्मितसृष्टिवर्णनमेव काव्यस्य विषय: । परिपूर्णस्य सर्वव्यापकस्य महतो भगवत्तत्वस्यवर्णनं काव्येन विधीयते ।

**आलोचना-**

समालोचक: पूर्वाग्रहमुक्त:, स्वार्थहीन:, आवेगरहित:, निरहंकार:, प्रमादशून्यश्च भवेत् । समालोचकेन यस्य ग्रन्थस्य समालोचना विधीयते तद्विषये तेन पूर्ण ज्ञानवता-भाव्यम् लेखकस्याद्देश्यमविज्ञाय समालोचना न विधातव्या । एकाग्रचेतसा समालोचकेन कृतेरनुशीलनं विधायस्वनिर्णय: कर्त्तव्य: ।

यदा कदा देशधर्म भाषाप्रेमवशात् समालोचक: पूर्वाग्रहग्रस्त: सन् समीक्षां करोति तदा तस्य समालोचना-सहृदयैर्विनिन्द्यते । अत: समीक्षक: पक्षपातविहीनोराग द्वेष-रहितश्च भवेत् । समीक्षकेन निर्भीकतया काव्यस्य मूल्यांकनं साहित्यिकमूल्याधारेण कर्त्तव्यम् । डा. जानसन-महाभागेन कथितम् यत्समीक्षक: कठोरातिकठोर नियमेन कृते: समालोचनां विदध्यात्, विख्यातानां महतां कलाकाराणां ग्रन्थस्य परीक्षणं तु निर्ममतया विधातव्यम् तेषां काव्यस्य दोषोद्घाटनं समालोचकस्य परं कार्यमन्यथा साहित्यक्षेत्रं दोषाक्रान्तं स्यात् यतोहि—

'यद् यदा चरति श्रेष्ठस्तत्तदेवेतरो जन: ।'
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥

सिद्धान्तानुसारं महतां दोषानुकरणेन समस्तं साहित्यं दोषान्वितं स्यात् ।

एवं डा. जानसनः प्रगतिशीलविचाराणां समर्थक आसीत् तस्य विचारा न प्रतिक्रियाग्रस्ता नापि पुरातनपरा। तस्य मतमासीत् यत् जगत् दिनानुदिनं प्रगतिमार्गमनुसरत्-भव्यं सौन्दर्यं प्रति समाकर्षित वर्तते। अत एव परम्परोद्-भूता अपि तस्य विचाराः रूढ़िग्रस्ता न वर्तते नवशास्त्रवादस्य मूलतत्वमनुसरन्नप्यसौ काव्यमुदारदृष्टिकोणेन पश्यति । Lives of the Poets ग्रन्थस्य रूढ़नियमैर्निरुद्धा समालोचनांग्ल समालोचनापाशमुक्ता जाता। अनेन साहित्यस्यनिरंकुशनायकानां विरोधः कृतः। अन्धश्रद्धा विनिन्दिता।



# रोमानीसमीक्षकाः
# वर्ड्सवर्थः

( ८ )

( १७७० - १८५० ई. )

विलियम वर्ड्सवर्थस्य काव्यकला सम्बन्धिनो विचाराः

एकोनविंशशतकस्य प्रारम्भे विलियम वर्ड्सवर्थेन नवशास्त्रवादात् (New Classicism) सम्बन्धं विच्छिद्य नव-विचारधारा 'स्वच्छन्दतावादः' काव्यसमीक्षायां समवतारितः। तेन हि स्वकीये 'लिरिकस बैलेडस' काव्यसंग्रहे कवेः काव्यस्य काव्यभाषायाश्च विषये स्वस्वच्छन्दविचाराः प्रकटिता :

परम्परागतां—कृत्रिमामाडम्बरपूर्णां भाषां विकृतां विरूपां मिश्रितां च शैलीं—परित्यज्यासौ काव्ये भाषायाः सारल्यमभिवाँच्छति । अनेन हि काव्ये मानवीकरणस्य वक्रोक्तेः विपर्यस्य वैषम्यस्य विरोधो तर्काः समुपस्थापिताः। पौराणिक कथानां भावाभासानां दन्तकथानां समावेशः काव्ये न करणीयः। वर्ड्सवर्थ महाभागेन काव्ये जनसाधारण भाषायाः प्रयोगस्यौचित्यं सम्प्रतिपादितम् । सरलास्वा-भाविकी सहजाडम्बररहिता भाषा पाठकानां चेतसि दुरवस्था-

मर्षंचि च निरस्य परमाह्लादं जनयति। कवितया तीव्रतमानां भावावेगानां समुच्छलनं जायते—Spont eneous overflow of Powerful feelings.

काव्ये सरलं ग्राम्य जीवनंवर्णनीयम्—'He should keep the Reader in the company of flesh and flood. भावावेग-समये भाषा स्वभावेन सहजा सरलाडम्बररहिता भवति। तदा तु भाषा प्रसादगुण परिपूर्णा भवति। भावावेग समये कवित्वशक्त्या स्वाभाविकरूपेण समागता अलंकारा वक्रोक्त्यादयश्च कृत्रिमाः न भवन्ति।

भाषायां छन्दसः प्रयोगः

वर्ड्सवर्थः कथयति यत् 'काव्यं छन्दोबद्धम्' भवति। कविः छन्दोऽधीनतया विशिष्ट भाषा प्रयोगप्रवणोभवति। कवि पाठकावुभावपि काव्ये स्वेच्छया छन्दसां संप्रयोगेऽनुमतौ वर्तेते। यतोहि छन्दः प्रयोगेन-मनोभावसंप्रकटनेऽवरोधो न जायते। कृत्रिम भाषाडम्बरस्य विरोधं कुर्वतानेन काव्य भाषायाः कृते नवीनं दृष्टिकोणं समुपस्थापितम्।

काव्यगुणः

सत्यं शिवं सुन्दरमिति सिद्धान्त मङ्गीकृत्य वर्ड्सवर्थः काव्ये भावानां समुच्छलनं नितान्तमावश्यकमिति स्वीकरोति। तेन कथितम्-यत् काव्येन पाठकस्य मस्तिष्कं प्रबुद्धं भाव्यम्

भावाः सशक्ताः शुद्धाश्च भवितव्याः । काव्ये सामान्यजीवन-सहजघटनानां चयनमपेक्षितम् , सहजजीवने भावानां तीव्रत्वं भवति । काव्यस्य लक्षणंकुर्वन्नसौ कथयति यत् 'काव्यम् मानवमनसः तीव्रतमभावनानां समुच्छलनं भवति, तस्योत्पत्तिः शांतावस्थायां भावस्मरणे सति जायते–

All good poetry is the Spontaveous overflow of powerful feelings it takes its origin from emot!on recollected in tranquility'. काव्ये सहजभावेन सहानाया-सरूपेण समागता अलंकाराः कवेः कौशलं प्रकटयन्ति ।

काव्यप्रयोजनम्–

वर्ड्सवर्थेन पाठकानां हृदये सद्भावप्रकाशः ज्ञान-वर्द्धनम् , भावपरिशोधनम् , नैतिकसदाचरणम् चेति काव्य-प्रयोजन रूपेणाङ्गीकृतम् । काव्येन भावाः सन्तुलिताः विवेकपूर्णाः शुद्धाः स्थायिनः प्रकृत्यनुरूपाश्च संजायन्ते । तेन हि नैतिक सदाचारणम् ; शिक्षादानम् , चरित्रनिर्माणमपि जायते । काव्यं तु शिक्षकवत् शिक्षादानम् करोति । परमानन्दोप-लब्धिर्हि काव्यस्य परं प्रयोजनम् । वर्ड्सवर्थ मते—यद्यपि सौन्दर्यस्य बोधे विज्ञानकाव्ययो र्महत्वं भवति किन्तु कवेः सौन्दर्यस्य महत्वमधिकं भवति । यतोहि तस्य ज्ञानं प्राकृतिकं, वैज्ञानिकस्य ज्ञानमर्जितं भवति । असौ हि कृत्रिमवागा-डम्बरात्काव्यं बहिष्कृत्य भावोद्गाराणां विशदाधारे

काव्यस्य प्रतिष्ठापनम् कृतवान्। काव्ये भावतत्वस्य प्रतिष्ठा, सहजा सरला जनसाधारणोपयोगिनी भाषा चेति तस्य द्वे कार्ये महत्वपूर्णे।

विलियम वर्ड्सबर्थः काव्ये कल्पनाशक्तेर्महत्वमुपपादयन्निगदति यत्कविरनया कल्पनया ब्रह्माण्डेनैक्यमनुभवति। बहिरङ्गापेक्षयान्तरिके पक्षे, सालंकृतभाषापेक्षया भावोच्छलने बलं दददसौ रोमानो समालोचनां विदधाति। तस्यनिम्नाङ्कित मान्यतानां काव्यक्षेत्रे गौरवपूर्णं स्थानं वर्तते।

१. काव्यनिर्माणप्रक्रियाधारेण काव्यस्य विवेचनं कृतम्।
२. काव्ये भावतत्वस्य महत्वमुपपादितम्।
३. जनसाधारणस्य भावाः भाषाश्च काव्ये सन्निवेशिता। अष्टादश-शतकस्य कृत्रिमारूढ़ा सालंकृताभाषा काव्ये-निषिद्धा।
४. काव्यम् 'सत्यं शिवं सुन्दरमिति' प्रतिपादितम्।

◎

# सेम्युअल टेलर कॉलरिजः

## ( ६ )

( १७७२ - १८३४ ई० )

रोमाँटिकयुगस्य महान् कविः सुप्रसिद्धश्च समालोचकः कॉलरिजो वर्तते। आध्यात्मिकान्तर्दृशा काव्यलोचनपरया प्रतिभया चासौ तत्वज्ञेषु विचारकेष्वन्यतमो वर्तते। अनेन सर्वप्रथमांग्लसमालोचनायां दर्शन मनोविज्ञान-तत्वविचाराणां समावेशो विहितः। कालरिजेन वर्ड् सवर्थस्व सहयोगमवाप्याऽष्टादशशतकस्य कृत्रिमरूढ़काव्य मूल्यानां विरोधो स्वच्छन्दतावाद-प्रवृत्तिः प्रतिष्ठापिता। असौ निरुढकाव्यनियमान् शिथिलयन् प्रतिभा महत्वं मौलिकतागुणं च प्रशंसयामास।

कालरिजेन न बहु विलिखितम् पुनरपि-आँग्लसमालोचनायामस्य महत्वपूर्णं स्थानं वर्तते। सेनट्अवेरी दृष्टि कोणे त्रयाणां समीक्षकाणालाँग्लो साहित्येऽनुपमं स्थानं वर्तते तेषु कॉलरिज एको वर्तते—"So then, there abide these three—Aristotle Longinus and Coleridge."

आर्थरसाइमन्स महाभागः कॉलरिजस्य प्रसिद्धां कृति Biograpin Literania आंग्लसाहित्यस्य सर्वोत्तमग्रन्थरूपेणांगी

करोति। आई. ए. रिचर्डसस्तं स्तुवन् ब्रवीति। Head an
Shoulders above everyother English critic.

जर्मनविदुषां शिलरश्लेगलशौलिगानां प्रभावे
प्रभावितः कॉलरिजः सर्वकलानां कृते काव्यशब्दस्योपयो
करोति। दर्शनविज्ञानेतिहासेष्वपि कवित्वं विलोचयति
समस्त ललितकलानां कृते (Poesy) पोयजी शब्दस्य तथ
काव्यस्य कृते (Poetry) पोयट्री शब्दस्य प्रयोगं करोति
तन्मते श्रवणेन्द्रियस्य काव्यं संगीतम्, नेत्रेन्द्रियस्य च काव
चित्रकला वर्तते। असौ काव्यमन्यकलाभिरभिन्नं मनुते
यथा काव्यं तथैव दर्शनविज्ञानेतिहसादयोऽपि कल्पनाजन्याः
एषूद्देश्यभेदेन भेदो जायते। विज्ञानेतिहासदर्शनानां तात्कालि
लक्ष्यं सत्याभिव्यंजनम् भवति। काव्यस्य तात्कालिकं लक्ष
मानन्दः, सत्यबोधस्तु काव्यस्यपरमं लक्ष्यं वर्तते।

सत्कवेर्गुणाः-

गाम्भीर्यं, भावुकता, भावावेगाः, कल्पना, विवेकाद
कवेर्गुणाः भवन्ति। प्रतिभावान्, तत्ववेत्ता, विविधज्ञा
विज्ञानाभिज्ञः, श्रद्धावान् जनो हि सत्कविपदं लभते। अस
मतमस्ति यत् नास्ति कवि काव्ययोर्मध्येभेदः Poetry is t
which is composad by a poet श्रद्धाविहीनः कविमूर्खं
An uncle vout poet is mad is an impossibility.

कविर्निवैयक्तिक भावेन impermonal वस्तुपरकदृष्टि-कोणेन objective च जगद्वस्तु जातं संपरीक्ष्य तद् वर्णने प्रयत्नवान् स्यात् स काव्ये स्वव्यक्तित्वं नाभिवेशयेत्, कविता सौन्दर्यमाध्यमेन तात्कालीनानन्दोद्रेकाय भावोद्वेलनं विदधाति। काव्यमेकं विशिष्टसंरचनं भवति यद् विज्ञानाद् विभिन्नतत्वम्। यतोहि काव्योद्देश्यमानन्दावाप्तिः विज्ञान-स्योद्देश्यं तु सत्यस्योपलब्धिर्भति। काव्यं सार्वजनीनमेवोचितं भवति। अत एव कविरात्माभिव्यंजनापेक्षया निर्वैयक्तिक भावेन काव्यसृजनं विदध्यात्। काव्यस्य लक्षणं कुर्वन्नसौ ब्रूते—

It is the excitement of emotion for the purpose of immediate pleasure, though the medium of beauty.

काव्ये भावतत्वस्य प्राधान्यमपेक्षितं वर्तते। गहनभावैः सहगम्भीरा विचाराः संमिलिताः सन्तः काव्यमुत्कृष्टं विदधति। नियमनिगडितं काव्यं विनिन्दयन्नसौ नियमानां विखण्डनं चकार। समारोपितानियमाः कल्पनाशक्ति कुण्ठितां कुर्वन्ति तदा काव्यं मौलिकं प्रभावान्वितं न जायते। कालरिजः काव्ये भावानां महत्वमङ्गीकरोति। तीव्रभावावेगैरेवोत्तमं काव्यं प्रजायते। भावावेगेनैव सालंकृता भाषा निष्पद्यते यतो हि—भावावेगा एवालँकाराणां मूलाधारा वर्तन्ते। भावावेगानां

भाषा स्वयमेव सालंकृता गाम्भीर्यमयी च भवति।

अत्र शंकासमुदेति यदयं कॉलरिज: निर्वैयक्तिको वस्तु-परककाव्यपरायणोऽपि मानवावेगानां समर्थनं कथं करोति? असौ सामान्यभावेभ्य: काव्यगतभावावेगानां तत्वं पृथङ् मनुते। तन्मते भाववेगा: Passion कवेरावश्यका: गुणा: सन्ति। भावावेगे सति कविव्यक्तित्वं स्वयमेव नश्यति। तदवस्थायां कविर्वेद्यान्तरशून्ये भावे रमते। सत्काव्यविषये तेन निगदितम् यत्सम्पूर्णकाव्यमेकं तत्वमततस्यविभिन्नेषु भागेषु परस्परं सामँजस्यमावश्यकम् काव्ये श्लोकानां छन्दसां पंक्तीनां च श्रृंखलापरस्परं समन्विता सती पाठकं श्रोतारं वा पदेपदे समाकर्षयन्ती रसोदन्वति तं विमज्जयति। पाठको हि पुन: पुन: पदे पदे स्थित्वा रसास्वादं करोति। कॉलरिजेन काव्यास्वादने सचेतस उपमा सर्पगत्या सहोपपादिता यो हि पुन: पुन: परिवर्त्य प्रचलति तथैव पाठकोऽपि पुन: पुन: पदे पदे रसास्वादं करोति। काव्यास्वादे तस्य गतिरश्ववत् न भवति यत्र शीघ्रप्रचलनमेव जायते। सम्पूर्णे काव्येप्रधानभूत एको भावोबिचारो वा भवेत् यस्मिन्सर्वेऽङ्गभूता भावा अनुस्यूता भवेयु:। तस्मिन्नैक्यस्य Tone भावनाया: Spirit स्वर:मुखरितो भवेत्। अनेन नाटके संकलनत्रयस्यस्थाने भावैक्यस्य Unity of Interest महत्वमुपपादितम्।

कॉलरिजस्य काव्यसिद्धान्ता: संक्षेपेण Biogrophi-

Literaxia मध्ये दर्शनीयाः सन्ति—

Good sense is the body of Poetic genius, fancy its drapery,, motion its life and imagination the sail that is everywhere and in each and forms all into one graceful and intelligent whole.''

अर्थात् सद्बुद्धिः कविप्रतिभायाः शरीरम, ललितकल्पनाःपरिच्छद, मनोवेगास्तस्य जीवनम् , कल्पना तस्यात्मतत्वम् या सर्वत्र सर्वाङ्गेषु व्याप्नोति ।

सारांशोऽयं वर्तते यत्-महतः कवेर्निम्नाङ्किता गुणाः भवन्ति—

१. पदयोजनायां माधुर्यम् ।
२. कविना-वैयक्तिकजीवनस्य सीमातोवहिरागत्यविषयवस्तुनस्ताटस्थ्येन चित्रणं कर्त्तव्यम् ।
३. विचारगाम्भीर्यम् कालरिजेन कथितं यद्यावर्धिनजात एतादृशो महान् कविर्यो दार्शनिको नाभवत् । यतोहि 'कविता' मानवीयज्ञानस्य विचाराणां भावानां भावावेगानां पुष्पं सौगन्ध्यं च वर्तते ।
४. भाषायाः काव्यविम्बानां च पूर्णाधिकारः - येन विचाराः क्रमवद्धाः भूत्वानेका अप्येकेन मूलविचारेणान्विता भवेयुः ।

५. काव्यस्य सार्वजनीनत्वम् ।

६. कलाकृतौ नैरन्तर्यमन्विर्तिश्च ।

७. विशुद्धस्यानन्दोद्रेकस्य क्षमत्वम ।

कल्पना-

कल्पनाविषये कॉलरिजस्य मतमस्ति यत् कल्पनामाध्यमेन विरोधिभावा: निर्विरोधिनो भूत्वा सख्यभावमाप्नुवन्ति । कल्पनया बुद्धिहृदययो: बाह्य पदार्थान्तरिक पदार्थयो:,प्राचीन नवीनयो:, अन्तर्वेगसंयमयो:, अवधारणाभावयो:, प्रातिनिधिकवैयक्तिकयो:, प्रत्ययबिम्बयोर्भेद: सर्वथा निवर्तते द्वन्द्वमध्ये सख्यं साहचर्यं च संजायते । कल्पनयैव प्रतिबोधन Perception अववोधनयो: Understanding मध्ये स्थितभेदो निर्वायते यो न बुद्ध्या निवारयितुं शक्य: ।

कॉलरिजस्तत्ववेत्ता दार्शनिक आसीत् तेन दर्शनाधारेण स्वकीया काव्यसिद्धान्ता: समुपस्थापिता: । तेनाङ्गीकृतं यत् सम्पूर्णासृष्टि: चेतनतत्वस्याभिव्यक्ति वर्तते जडचेतनयोर्मध्ये सामंजस्यं वर्तते । संसारस्य सर्वाणि वस्तूनि परं ब्रह्मण: प्रतिनिधित्वं कुर्वन्ति । कल्पना माध्यमेनान्तरिकदृष्ट्या जन: तस्य ब्रह्मण: साक्षात्कारं करोति । कविरपि पार्थिवजडपदार्थजातं कमलंसरोवरादिकं विलोक्य भाव जगति नवनवोद्भावनं करोति । जडपदार्थस्यचेतनतत्वे प्रभावे पतितो सति काव्य सृजनं जायते ।

कालरिजेन कल्पनायाः प्रकारद्वयं प्रतिपादितम् ।

१, प्राथमिकी कल्पना Primary Imagination.

२. विशिष्ट कल्पना Secondary Imagination.

प्राथमिकोकल्पना खण्डखण्डरूपेण विषयविषयिणो र्भेदं समाधाय तात्त्विक रूपेण वस्तु स्वरूपं समुपस्थापयति । विशिष्ट कल्पना कलाकारे भवति । कलाकारः स्वभावनाधारेण सुन्दरं नवप्रकृतिसृजनं करोति, कलया परिवर्तितमन्यदेव जगद् विरच्यते, एषा कल्पना समन्वयकारिणी शक्तिर्वर्तते । यथा सदृशविसदृशयोः, सभीमासीभयोः, सामान्यविशेषयोः, नवीनप्राचीनयोः, उत्साहभावनयोः सामंजस्यमुपपाद्यते ।

कार्लरिजमते-गद्य पद्ययोर्मध्ये वाह्याधारेण नास्ति कोऽपि भेदः। गद्यरूपेणपि काव्यस्यनिर्धारणं संभवति । गद्य पद्ययोर्भेदस्तु वस्तुतत्वाधारेण भवितु शक्यते। यथा यत्र सत्यस्याभिव्यक्तिर्भवति तद्गद्यम् यत्र चानन्दोद्रकस्तत् पद्यम् । ग्राम्यभाषावर्ड् सवर्थस्य मतं विखण्डयन्नसौ कालरिजः काव्येग्राम्यजीवनचित्रणं निषेधयति । कवितायामादर्शचरित्रचित्रणमेव वरं प्रतिपादयति । काव्यस्योद्गमः भावोद्रेकेण भवति भावोद्रेकाः सुसंस्कृतया सालंकृतया भाषया जायन्ते । अतः काव्ये सालंकृता भाषैव समुचिता भवति । काव्ये छन्दसो प्रयोगो न केवलमलंकरणमेव तत्तु काव्येन सहाभिन्नरूपेण सुसंवद्धम् वर्तते ।

कालरिजस्य दर्शनशास्त्राधारितं काव्यविवेचनं विशृंखलितं प्रतीयते। तस्यकल्पना तत्वमपि सर्वग्राह्यं-नास्ति। यतोहि तेन परस्पर-विरोधिनो भावाः संप्रति-पादिताः। स एकत्र काव्ये मनोवेगानामनिवार्यतां प्रतिपाद-यति, अपरत्र कवये निर्वैयक्तिकत्वोपदेशं प्रतिपादयति। तथापि काव्यसमीक्षा क्षेत्रेकालरिजस्य मूर्द्धन्ययमं स्थानं वर्तत एव।

# आधुनिकसमीक्षकाः

## - मैथ्यू आर्नाल्डः -

## ( १० )

( १८२२ - १८८६ ई० )

पाश्चात्यसमीक्षा शास्त्रस्य विकासे मैथ्यू आर्नाल्डस्य योगदानम् ।

एकोनविंशशतकस्यांग्ल्यसाहित्यसमीक्षकेषु मैथ्यू आर्नाल्डस्य स्थानं महत्वपूर्णमस्ति । काव्यं हि मानवजीवनस्य व्याख्यायाः आधारो वर्तते । असौ काव्ये व्यावहारिकोपयोगस्य महत्वं प्रतिपादयति । मानवजीवनस्य समस्यानां समाधानं काव्येन सम्भवति । साहित्यस्य मूल्यांकनं जीवनसन्दर्भे कर्तव्यम् : यत् साहित्यम् - जीवननिरपेक्षं तत्तुच्छम् तस्य विश्लेषणमपि निरर्थकम् भवति ।

असौ कथयति—साहित्यम् नास्ति आत्माभिव्यक्तेः साधनम् , साहित्यं तु मानवजीवनस्यालोचनम् भवति ।

आनन्दावाप्तिः नास्ति लोकमंगलदायकस्य शिवस्य काव्यस्य प्रयोजनम् । काव्यप्रयोजनं तु जीवनस्य पूर्णं ज्ञानमात्मविकासः समाजोत्थानम् च भवति ।

## उत्तमसाहित्यस्य वैशिष्ट्यम्-

मैथ्यू आर्नाल्डः काव्यस्य तिस्त्रः अवस्थाः प्रतिपादयति—

१. महत्कृत्यमेव काव्यस्य विषयः।
२. अभिव्यंजनायाः न्यूनातिन्यूनः प्रयोगः।
३. काव्यस्य स्पष्टरूपेण प्रणयनम्।

तस्मिन्काले विषयापेक्षया विषय प्रतिपादनतत्वस्य महत्वमधिकमासीत्, आर्नाल्डेन निराकृतमेततत्।

तन्मते मनोदशाभिव्यक्तिर्नास्ति सर्वोत्कृष्ट काव्यतत्वम्।

उत्तरं ददन्नसौ कथयति—

'No assuredly it is not, it never can be so.'

आर्नाल्डः कथयति महाकाव्ये कार्यं तस्य चयनं तन्निर्माणम् चेति त्रयमेवमहत्वपूर्णम्। विषये सर्वं सन्निहित भवति। अतो हि कार्यस्य चयनं कृत्वा कार्ये सन्निहितया भावनया सह तादात्म्यं करणीयं भवति। तेन हि काव्य तत्वस्य सर्वस्वं स्वत एव संजायते। ते कार्यव्यापाराः समुत्कृष्ट भवन्ति यैः मानवस्य सहजाः संस्कारा आन्दोलिताः भवन्ति ताः भावनाः उद्थापनीयाः यासां मानवजीवने स्थायिनिवा

भवति ये च कालनिरपेक्षाः भवन्ति । काव्ये सत्यं शिवं सुन्दरमित्यस्यमहत्वं वर्तते । स कथयति यत् काव्ये बाह्य-तत्वापेक्षयाभ्यन्तरिकतत्वानां समावेशः प्रशस्यः ।

प्राचीनेषु विषयेषु शाश्वतविचाराः वाहुल्येन समुप-लभ्यन्ते सत्यस्योद्घाटनमपि तत्र दरीदृश्यते । वर्तमान कालीनाः विषया अपूर्णाः सन्ति । ते तु काव्यस्य कृते अनुपयोगिनः सन्ति । आधुनिक जीववस्य घटनाः क्षणिकाः, नास्ति काव्ये तासां महत्वम् । तदेव सत्काव्यम् येन नव-निर्माणस्य संपोषणस्यानन्दस्य चोत्पत्तिर्भवेत् । काव्ये उच्चादर्शयुक्तः कविः गम्भीरमपि विषयं सरलया स्वच्छया शैल्या सम्प्रतिपादयन् सत्कविपदं लभते । उत्कृष्टशैलि सम्पादनाय चत्वारः प्रकाराः सन्ति । ( ) काव्यात्मकत्वम् (२) उच्चादर्शः (३) सरसता (४) स्वच्छता च ।

आक्षेपाः-

अन्ये समीक्षकाः स्टाटजेम्सादयः कथयन्ति यत् आर्नाल्डेन काव्ये शाश्वतप्राचीनोदात्तविषयाणां समर्थनम् वर्तमानविज्ञान भौतिकविज्ञान समस्यानां निंदनं कुर्वता प्राचीनविषयाणामातंके नवीनविषयाणां क्षमत्वं नावलोकितम् यथा—'His faith in the guidance of Preemincnt models ............tended to hide from the potential excellence of the new and untried.'

अन्यच्चार्नाल्डः शैलिमध्ये सरलतां स्वच्छतां चाङ्
करोति जटिलशैलिविरोधो कारणं तु तेन किमपि नोपस्थापि
सत्यं तु एतत् वर्तते यद् जटिलशैलिमाध्यमेनापि-विरचि
श्रेष्ठतमा ग्रन्था: विलोक्यन्ते ।

**समालोचनसम्बन्धिनो विचारा-**

जीवनस्य समालोचनमेव साहित्यम् । अत एव सम
लोचके गुणत्रयस्यापेक्षा भवति यथा—

१. यथार्थरूपेण वस्तूनां ज्ञानस्य परीक्षणस्य च क्षमत्वम् ।

२. ज्ञातस्य सद्विषयस्य प्रसारणम्, येन हि जगति स
विचारा: प्रसरेयुः । अत एव समालोचके धर्मप्रचारक
गुणा: तदुत्साहश्चावश्यक: ।

३. रचनाशक्तेः क्रियाशीलत्वम् । येन हि जगति सद्भा
सम्प्रेषणे प्रतिभा संपोषणं भवति । समालोचकस्य का
त्वेतद् यत् स समाजे सत्साहित्यसम्प्रेरकरूपेण तथा
सद्ज्ञानसंवाहकरूपेण ख्यातिं लभेत् । समालोचक
निष्पक्षतागुणं विवेचयन्नसौ कथयति यत् समालोच
नैतिकबौद्धिक - सद्विचारविरोधितत्वानां निराक
प्रयत्नवता भवितव्यम् । आर्नाल्डस्य मते मध्यमवर्गी
जना: रूढिवादधर्मान्धव्यापार धनार्जनभोगविलासे
निमग्ना: सन्त: मिथ्याडम्बरपरायणा: भवन्ति । नगर

यान्त्रिकजीवने निगडिता आत्मज्ञानविरहिता एतादृशा जनाः साहित्यं समाजं च कुत्सितं कुर्वन्ति । समालोचकः तेषां विचारैरप्रभावितः सन्निष्पक्षो भवेत् ।

## आर्नाल्डस्य योगदानम्-

आर्नाल्डेन आंग्ल साहित्ये मिथ्यात्वस्य आडम्बरस्य च विरोधने स्वविचाराः प्रकटिताः तेन हि—साहित्ये सत्योदात्त-सद्विचारादीनाँ प्रतिष्ठापनं विहितम् । तेन हि शिक्षितम्—जातिवादाडम्बरासत्याद्धं सत्यतिरस्कारे सर्वथा प्रयतनीयम् । आंग्लसमीक्षाक्षेत्रे आर्नाल्डस्य महत्वपूर्णं स्थानं वर्तते । न केवलम् इग्लैण्डदेशे तस्य प्रभावः, तेनामेरिका—इमर्सन–हेमरी जेम्सादयोऽपि संप्रभाविताः । एकेन समालोचकप्रवरेण निगदितम्-यत् 'मैथ्यू आर्नाल्डः' आंग्लसाहित्यस्य 'अरस्तू' वर्तते । समालोचनेतिहासे स अजरामरवत् तस्य चाक्षया कीर्ति वर्तते' ।

## सत्साहित्यम्-

आर्नाल्डेन स्वकीय काव्यस्य भूमिकायां विलिखितम् यत् कविना प्राचीनयूनानकाव्यस्यानुकरणँ कर्तव्यम् । प्राचीनाभिजात्यस्य वैशिट्यमेतत्—कार्यव्यापारस्य गुरुत्वम्, संरचनात्मिकाभिव्यक्तिः, समानुपातः, सुसंगतिः, भव्याशैली च । कवि महतः कृत्यस्य चयनं कुर्यात् । उपयुक्तशैलि-माध्यमेन तमभिव्यंजयेत् येनानन्दोपलब्धिर्भवेत् । रचनायां-

विविधङ्गानामन्वित्यानन्दोपलब्धिर्भवति । असौ काव
अरस्तू मतानुसारेण कार्यकथानकयोः सर्वाधिक्यं महत
प्रतिपादति ।

आर्नल्डेनांग्लसमालोचनायां सत्योदात्तविचारगरिमा
दयः सद्गुणाः सन्निवेंशिताः । मिथ्यात्वाडम्बरप्रियत
छद्मनां विरोधः कृतः । तेन कवयः शिक्षिताः,यत्तोऽतिवादिता
डम्बरार्द्धसत्यादिदोषान् तिरस्कृत्य सत्यान्वेषणे तत्परा
भवेयुः । समालोचनासंसारे यथारस्तूस्तथैवासौ मैथ्यू आर्नल्ड
यशोलाभमवातप्वान्, अनेनामेरिकादेशस्य ईमर्सन हेनरी
जेम्सादयोऽपि प्रभाविता आसन् ।



# आई० ए० रिचर्ड्सः

## ( ११ )

( १८९३ – १९७९ ई० )

आई० ए० रिचर्ड्समहाभागस्य सिद्धान्ताः

आई० ए० रिचर्ड्स (१८९३) यूरोपीय साहित्य विचारकेष्वङ्गुल्यगण्योऽन्यतमः, साहित्यमनीषीरूपेण यशोलाभमवाप्तवान् । अनेन हि साहित्यसमीक्षाकायाः वैज्ञानिको व्यवस्थितश्च स्वरूपः समुपस्थापितः । अस्य 'प्रिंसिपल आफ लिटरेरी क्रिटिसिज्म' तथा च 'प्रेक्टिकलक्रिटिसिज्मे'ति आधुनिक साहित्यसमीक्षायाः बहुमूल्यं ग्रन्थरत्नद्वयं वर्तते । अनयोर्मध्ये व्यावहारिकरूपेण सैद्धन्तिकरूपेण च यादृशी समीक्षा वर्तते तथा समीक्षयाधुनिक मनोविज्ञानस्य महत्वमपि विवर्धितम् । रिचर्ड्स महोदयेन काव्य सम्बन्धि-समस्यानां समाधाने मनोविज्ञानस्यावलम्बनमपि गृहीतम् ।

काव्यसिद्धान्तः

रिचर्ड्स महाभागः प्राचीनां काव्यसमीक्षामवैज्ञानिकीमिति मन्यमानो निगदति-तद्धि—मात्रमनुमानम् । प्रतारणा वर्तते, विभिन्नाः पृथक् पृथक् भूतास्तीक्ष्णाः विचाराः सन्ति ।

चमत्कारिण्यः कल्पनाः सन्ति । व्यावहारिकं वक्तृत्वस्य काव्य मस्ति । अन्धकारोऽयम्, पूर्वाग्रहश्च वर्तते ।

आई० ए० रिचर्ड्सस्यसिद्धान्तानां महत्वमेतत् यदनेनाधुनिकयुगस्य कलानिरपेक्ष सिद्धान्तस्य, 'कलाकलायैः' 'काव्यं काव्यस्य' कृते प्रभवतीति-सिद्धान्तानां खण्डनं विधाय तत्कालीन सौन्दर्यशास्त्रीयावधारणानाम् निराकरणं कृतम् । एते सिद्धान्ताः मानवीयजीवन व्यवहाराद्दूरतरा आसन् । रिचर्ड्समहाभागेन मनोविज्ञानस्याधारेण काव्यस्यभाव पक्षं तादृशं विवेचितं येन हि पाश्चात्यसाहित्य समीक्षाशास्त्रे नूतनालोकस्योदयः संजातः । तेन स्वकीये 'प्रिंसिपल आफ लिटरेरीक्रिटिसिज्म' तथा 'साइंस एण्ड पोयट्री' ग्रन्थद्वये काव्यस्य नूतनसिद्धान्तानां स्पष्टरूपेणोपस्थापनं विहितम् ।

आई. ए. रिचर्ड्स महाभागस्य— १. सम्प्रेषणसिद्धान्तः २. मूल्यसिद्धान्त इति द्वौ सिद्धान्तौ वर्तेते ।

## १. संप्रेषण सिद्धान्तः-

रिचर्ड्समतानुसारेण कस्यापि काव्यस्य समीक्षायां काव्यमूल्यस्य वैज्ञानिकः आधारः, संप्रेषणं चेति द्वे कारणे सक्षमे । यद्यपि रिचर्ड्सकालात्पूर्वमपि 'प्रेषणीयता' शब्दस्य प्रचारः समीक्षाक्षेत्रे समभवत् । किन्तु रहस्यात्मकरूपेण विभिन्नाः विचाराः 'प्रेषणीयता' विषये आसन् । केचन्

मन्यन्ते यत्कवेरनुभूतिः पाठकानां चेत स तादृक् रूपेणावरतति यथा धनं हस्ताद्हस्तान्तमनुगच्छति। रिचर्ड् स महाभागोनास्य विरोधं कुर्वता स्पष्टरूपेण प्रतिपादितम् यत् 'सम्प्रेषणम्' किमपि रहस्यात्मकमदभुतं वा वस्तु नास्ति एतत्तु मनसः सामान्यं कर्मः। रिचर्ड् समते-विशेषपरिस्थितिमध्ये विभिन्न मस्तिकेषु मनःसु च समा साधारणीकृताचानुभूतिर्जायते। अत्रावधेयम् यद् रिचर्ड् समहाभागः विभिन्नानुभूतीनामा-धारस्यैक्यं प्रतिपादयति। तासामनुभूतीनां पारस्परिक-मैक्यं स न स्वीकरोति एतद्विषये विश्लेषयन्नसौ निगदति यत् यदा कस्मिन्नपि वातावरणे कस्याचिद्जनस्य मष्तिष्कं प्रभावान्वितं भवति तदा तत् क्रियाप्रभावेनान्योऽपि जनः तादृशीमनुभूतिमवाप्नोति यादृशी प्रथमेन जनेनावाप्ता स्यात्। तदेव सम्प्रेषण शब्देनोच्यते। वस्तुतः कस्याप्यनुभूतिः केनाप्यनेनानुभूता सती सम्प्रेषण णीयता पदं लभते।

'सम्प्रेषण' तत्वस्य मीमांसांकुर्वन्नसौ ब्रूते यत्सम्प्रेषणस्य तत्वद्वयम्—१. कवेर्वर्णनक्षमत्वम् २. पाठकस्य ग्रहण-शक्तिश्च। एतदतिरिक्तम् त्रीण्यन्यानि गौणसाधनानि च सन्ति।

(क) विषयस्य गम्भीरपरिचयो व्यापकत्वञ्च।

(ख) घनिष्ठं ज्ञानम्।

(ग) जीवनस्य परिस्थितीनामनुभूतीनां च साम्यम्।

रिचर्ड्स महाभागः साधारणजनस्य कलाकारस्य अन्तरे महदन्तरं स्वीकरोति यथा तेन कथितम्—'साधारण-जनस्य कलाकारस्य च मध्ये सर्वाधिक्यं महदन्तरमेतत् यद् कलाकारस्यानुभवे विस्तारः तस्य मृदुता, विभिन्नतत्वेषु सम्बन्धस्थापनस्य स्वातन्त्र्यं च तत्र कलाकारे विलोक्यते। कलाकारः कामप्यवस्थां सम्पूर्णरूपेण संगतिपूर्णरीत्या विलोक्य तां प्रति स्वकीयां प्रतिक्रियामभिव्यनक्ति ।

कलाकारे साधारणगुणस्यानिवार्यरूपेण समावेशो भवति यतो हि यावत्कवेरनुभवाः अन्यजनानामनुभवैः सह साधर्म्यं नाप्नुवन्ति तावत्संप्रेषणस्य कार्यं पूर्णतां न गच्छति। यत्र द्वयोः स्थित्योर्मध्ये भेदो भवति तत्र कल्पनासाहाय्येन सम्प्रेषणं विधीयते । रिचर्ड्समतानुसारेणकल्पना अपि मनसोऽन्यक्रिया इव भवन्ति। यदाहि केचनावेगाः सक्रिया भवन्ति तदाऽन्येऽपि-आवेगाः वाह्यकारणानामभावेऽपि जागरिताः भवन्ति। रिचर्ड्स महाभागः एतादृशानावेगाने 'कल्पना' रूपेण स्वीकरोति। एतैरावेगैर्विम्बोत्पत्तिरनिवार्या न भवति यतो हि-कल्पनायाः कार्यं बिम्बनिर्माणं नास्ति यथान्येसमीक्षकाः स्वीकुर्वन्ति ।

अस्मिन्विषये प्रश्नोऽयं समुदेति यत् कलाकारस्य कृते सम्प्रेषणं परमावश्यकम् किं कलाकारेण तदर्थं विशेषप्रयत्नवता भाव्यम् । एतदर्थं रिचर्ड्सस्य मतमस्ति यत् काव्यकला

सम्पादनाय सम्प्रेषणस्य तत्वं तु आवश्यकं भवति किन्तु कलाकारेण तत्र प्रयत्नवता न भवितव्यम् । यतो हि यदि कविः सम्प्रेषणविषये प्रयत्नवान् भवति तदा तस्य रचनायां कृत्रिमता समुत्पद्यते । कलासु स्वाभाविकोगुणस्तदैव जायते यदा कलाकारः केनापि बाह्यप्रयत्नेनानामृष्टमनाः स्यात् । रिचर्ड्स मतानुसारं—यदि कलाकारस्तल्लीनतया कला-निर्माण कर्मणि निमग्नः सन् स्वकीयां कृतिं विदधाति तदा-प्रेषणीयतागुणः स्वाभाविकरूपेग तत्कृतौ समागच्छति । सामान्यरूपेण कार्यं सम्पादयन् कलाकारः स्वानुभूतीनां प्रस्तुतीकरणे सक्षमो भवति पाठकानां मनःसु च तदनुकूलाः भावा सरलतया सामान्य रूपेणोत्पद्यन्ते ।

संप्रेषणस्य माध्यमाः

काव्ये सम्प्रेषणस्य मुख्यमाध्यम रूपेण भाषायाः स्थानं सर्वोपरि वर्तते । रिचर्ड्स महाभागेन भाषाविषये सूक्ष्म विवेचनं कृतम् । मुख्यतो हि भाषायाः प्रयोगः अर्थस्य ज्ञानाय भवति । रिचर्ड्स महोदयेन स्वकीय प्रैक्टिकल क्रिटिसिज्मेति ग्रन्थे अर्थस्य चत्वारः प्रभेदाः सम्प्रतिपादिताः ।

१—वाच्यार्थः (Sense)

२—भावः (Feelings)

३—वक्तृवाम्गता चेष्टा (Tone)

४—अभिप्रायः (Intention)

१. वाच्यार्थ-

यत्र किमपि वस्तु विषयो वा शब्देनोच्यते ।

२. भाव-

कस्यापि वस्तुनः विषयस्य वा संसूचनं केनापि भावेनान्वितं भवति ।

३. वक्तृवाग्गताचेष्टा-

वागिंगितेन चेष्टितेन वा पाठकं श्रोतारं प्रति वक्तुः विचाराः संक्रामिताः भवन्ति । रिचर्ड्सः कथयति—यदुद्गाराणां चेष्टितं वक्तृश्रोतृमध्ये सम्बन्धस्य संसूचकं भवति ।

४. अभिप्राय-

सामान्यरूपेण कश्चनजनः केनाप्यभिप्रायेण किंचित् वदति अतोहि भाषया सह तस्य गहनतमः सम्वन्धः । भाषामाध्यमेन प्रायश उपर्युक्ताश्चत्वारोऽर्थाः संसूचिता भवन्ति किन्तु विषयभेदेन परिस्थितिभेदेन चार्थेषुपरिवर्तनमपि जायते । वैज्ञानिकपुस्तकेषु वाच्यार्थस्य महत्वं भवति । काव्येषु भावानां महत्वम् । पुनरपि वाच्यार्थभावार्थौ परस्परमसम्बद्धौ न प्रभवतः । वाच्यार्थ भावार्थयोः

पारस्परिकसम्बन्धो रिचर्ड्समहोदयेन त्रयः स्वरूपाः स्वीकृताः ।

१—यत्रार्थः एव भावस्य संसूचकः :

२ - यत्रार्थः भावानुभूतीनां सूचनकः ।

३—यत्रार्थः प्रसंग विशेष साहाय्येन विभिन्न भावानां संसूचकः ।

यद्यपि वाच्यार्थ भावार्थयोरभेद सम्बन्धो वर्तते । पुनरपि काव्ये भावानाँ तादृशं महत्वं येन हि काव्ये वाच्यार्थस्य सूच्यार्थस्य च गौणता जायते । काव्ये तथ्यं तु साधनं भवति । ये तथ्यवस्तुना विचाराणामाधारेण वा काव्यस्य मूल्यांकनं कुर्वन्ति तेषामेषो व्यवहारः न न्याय्यः एतादृशानां विचारकाणां विरोधं कुर्वन्नसौ डा. रिचर्ड्स महाभागः कथयति —'काव्येविचाराणामभिव्यक्तिर्हि भावपरिपोषणायैवोचिता । नास्ति स्वातंत्र्येण तेषां किमपि महत्वम् । काव्ये विचाराणां सत्यप्रतिपादकरूपेण प्रतिष्ठापनं तेषु च गम्भीरतया विश्लेषणं नोचिम् ।

२. काव्यमूल्यसिद्धान्तः

रिचर्ड्समहाभागः मनोविज्ञानाधारेण काव्यमूल्यं विवेचयति । तस्य मतमस्ति यत्साहित्यमूल्यस्य नास्ति किमपि विष्टितमं मानम् यथान्यासां मानवीयक्रियाणां मूल्यं तथैव

साहित्यस्य मूल्यमानं भवति । मनोविज्ञानाधारेण मानव-मनसः आवेगानां द्वौ भेदौ भवतः ।

१—बुभुक्षा, वासना, तृष्णा च ।

२—वितृष्णा ।

तृष्णया वयं मनः कामनापूर्त्यर्थं प्रयतामहे । वितृष्णया च वयं ताभ्यः कामनाभ्यो दूरतरं गन्तुकामाः भवाम । प्रथमावेगाः प्रवृत्ति मूलकाः अपरे च निवृत्तिमूलकाः सन्ति । रिचर्ड्स मते-तेषामावेगानां मूल्यं भवति येऽस्माकं तृष्णातृप्ति कारकाः भवन्ति । यतो हि सर्वो हि जनः स्ववासनापूर्तये प्रयतते । कस्मिन्नपि क्षणे मानवमनः निर्वासनं सत् भोगानां संगतिसाधनं विना वितृष्णं भवितुं न शक्यते ।

रिचर्ड्स मते 'मनसस्ता अवस्थाः सर्वाधिक-मूल्यवत्यो भवन्ति यासु मानवीयक्रियाणां सुसंगतिः संस्थापिता भवति । भोगानां स्वल्पतमः संघर्ष एवोचितः, तेषां कर्तनं हननं नियमनं च नोचितम् नैतिकसमस्यानां समाधानं—मानसिक सुसंगठेनैन भवितुं शक्यते साहित्यमूल्यमपि सुसंघटनेऽस्मिन् सन्निहितम् । साहित्यमूल्यं नास्ति केवलं भावजागरणे तत्तु सति भावोत्कर्षे तदुत्तरवर्तिनि व्यवहारकौशले निकषितं सन् मूल्यवत् भवति । एवं रिचर्ड्स मते प्रभावमूल्यं हि साहित्य-मूल्यं वर्तते । यस्मिन्काव्येऽधिकाधिकं भावानां व्यवस्थितं

निबन्धनं स्यात् विरोधिभावानामावेगानां च सन्तुलनं भवेत् तदेव काव्यं रम्यम् ; एवं रिचर्ड्सः ट्रेजडीकाव्यं सर्वोत्कृष्ट । काव्यमिति धोषयति ।

रिचर्ड्स महाभागः मनसः क्रियाशून्यत्वम्; उत्तेजना-माध्मेन मनः क्रियाशीलत्वं वा न काव्यप्रयोजनत्वेनाङ्गी करोति तस्य काव्यप्रयोजनं तु एतदेव वर्तते यद् मनसः तादृशी स्थितिः चारुतरा भवति यदा मनसि विभिन्नावेगानां समन्वितं निबंधनं भवेत् । येन हि सहृदये जनै बाह्यक्रियासंपादनाय तत्परता भवेत् । काव्यास्वादस्येयं दशा रसास्वाददशारूपेण ख्याति लभते ।

एवं हि वैज्ञानिकाधारेण साहित्यमूल्योपरि विचारं कुर्वता रिचर्ड्समहाभागेन 'साहित्यप्रभाव मूल्य' सिद्धान्तस्य संस्थापना कृता । अतः वर्तमान काले वैज्ञानिकरूपेण साहित्य समीक्षायाः पथप्रदर्शकः रिचर्ड्समहाभागः स्मृतिपथमानीयते विद्वत्समालोचकैः ।

# टामस स्टर्न्स इलियटः

( १२ )

( १८८८ - १९६५ ई० )

आधुनिक पाश्चात्यकाव्यसमीक्षकेष्वन्यतः टी. एस. इलियट (१८८८-१९६५) न केवलं समीक्षक एवासौ स्वयुगस्य श्रेष्ठकविः नाटककारश्चास्ते। अस्य व्यक्तित्वे समर्थसमीक्षकस्य श्रेष्ठकवेः प्रशस्तनाटककारस्य च गुणाः सम्मिलिताः सन्तो विराजन्ते। काव्यसम्बन्धि दृष्टिकोणेनायं नवीनतमम व्यक्तिवादमतं समुपस्थाय समीक्षाक्षेत्रे — विशेषसम्भ्रमं जनयामास'।

काव्यकर्त्ता काव्यसमालोचकश्चेति द्वाभ्यां प्रकाराभ्यामसौ टी. एस. इलियटमहाभागः आधुनिकांग्ल्यसाहित्ये मूर्द्धन्यतमं स्थानं लभते।

असौ हि काव्ये भावताध्यात्मिक दृष्टिकोणस्य विरोधं कुर्वन् प्राचीनवस्तुगतस्य तटस्थस्य च दृष्टिकोणस्य समर्थनं कृतवान्। साहित्यक्षेत्रेऽव्यक्तिवादसिद्धान्तेनासौ महत्वपूर्ण योगदानं चकार।

सिद्धान्तविवेचनात्पूर्वं तस्य विचारधारायाः भूमिका विषये विवेचनमपेक्षितं वर्तते। इलियटस्य काव्यसिद्धान्तानां सारः तस्य प्रसिद्धे 'परम्परा' 'वैयक्तिक प्रतिभेति' ग्रन्थद्वये समुपलभ्यते। जीवनविषये साहित्यविषये च तस्य दृष्टिकोणं पारस्परिकं वर्तते। राजनीतौ स राजभक्तः, साहित्ये च पुरातनवाद परायणः।

इलियटस्य विचारे कस्याप्येकस्य कालस्य व्यक्ति-विशेषस्य वा साहित्यं न किमप्यस्तित्वं बिभर्ति। साहित्यं तु सम्पूर्णमखण्डात्मकं च भवति यस्मिन्नविच्छिन्ना काव्यधारा प्रवहति। अतीतं वर्तमानं चोभे परम्परायामस्यामनुबद्धे। अतोतस्य वर्तमाने काले प्रभावः पतत्येव परन्तु वर्तमानस्य प्रभावोऽपि विगतेऽतीते संजायते। एतत्तु स्पष्टं वर्तते यत्पूर्व-वर्तिसंस्काराणां प्रभावेन वर्तमानसमयः पूर्ववर्तिसमयस्या-धमर्णतां बिभर्ति। किन्तु वर्तमानकालोऽपि नवोद्भूतस्यास्ति-त्वस्य संरक्षणायातीते काले पदं दधत् तस्मिन्नतीते-परिवर्तनं करोति एवमतीतवर्तमानयोरपृथगस्तित्वं जायते।

वर्तमानतात्कालिकज्ञानेन सहातीतज्ञानमपि कवि चेतसि मस्तिष्के वा परमावश्यम् यतोहि-कस्यापि कवेः विचाराः संदेशाः वा न स्वतः एव परिपूर्णाः भवन्ति नास्ति तेषां स्वातंत्र्येण किमपि महत्वम्। प्रथग्रूपेण कस्यापि कवेर-ध्ययनं नावश्यकम्, पूर्ववर्तिकवीनां शृंखलायां संस्थाप्य कवि-

रत्नविशेषस्य ज्ञानालोके प्रयतितव्यम् । स्वचेतनालोकस्य ज्ञानमेव कलाकारस्य कृते न पर्याप्तम् । स तु समाजजाति-देशादीनामखण्ड चेतना ज्ञानेन परिपूर्णं ज्ञानवान् भवति । इयं जातिगताचेतना सततो विकासशीला भवितव्या । काव्यस्य प्राचीनानि नव्यानि वा प्रस्फुटनाति जातिगतचेतनान्तर्गतानि जायन्ते । निर्भ्रान्तरूपेण कविः अतीतचेतनान्वितो भूत्वा जीवनर्यन्तं तां चेतनां प्रवर्धयेत् । एवं हि परम्परासंरक्षणार्थं कविना स्ववर्तमानस्थितीनां समुत्सर्जने प्रयत्नवता भवितव्यम् कलाकारस्य विकासस्तदैव सम्भवो भवति यदा तेन आत्म-निषधस्यात्मोत्सर्गस्य च मार्गेऽनवरतरूपेण प्रयत्नवता भूयते ।

क्लासिकवादः-

इलियटः क्लासिकवादी वर्तते । क्लासिक शब्दार्थो हि परिपक्वता प्रौढ़ता वा (Maturity) वर्तते । अनेन प्रतिपादितं यत् प्रकारत्रयेण साहित्यसृजनं विधीयते । सभ्यताभाषा-मस्तिष्कप्रौढ़ितया परिवक्वं प्रौढ़काव्यं प्रजायते । एतेत्रयोगुणाः

१—मस्तिष्क प्रौढ़तायांमितिहास बोधः परमावश्यकः । देशस्य समाजस्य च ज्ञानेन नवीनसाहित्योदयो जायते ।

२—शीलप्रौढ़तायामादर्शचरित्रं कारणम् ।

३—भाषाप्रौढ़ता तदा जायते यदा कविः अतीत बोधो वर्तमान विकासे भविष्य जागरणे सचेतनो भवेत् ।

परम्परासिद्धान्तः-

एकोनविंशशतके स्वच्छन्दतावादस्य प्राबल्यमासीत्। भावाभिव्यंजनस्यप्रबलाग्रहेण खिन्न: टी.एस. इलियट: क्लासिक मतं प्रतिपादितवान् । स्वच्छन्दतावादे कवि: भावोद्रेकेण कल्पना शक्त्या काव्यनिर्माणँ करोति स्म। अस्मिन्मते कवे र्व्यक्तित्वंमुख्यमासीत् इलियटेनात्मप्रकाशनभावोद्रेकसिद्धान्तस्य खण्डनं कृतम्। तेन कथितम् यत् काव्ये परम्परायाः मुख्यस्थानं वर्तते। इलियटेन वैयक्तिकप्रतिभा (Telent) स्थाने परम्परा (Tradition) प्रतिष्ठापिता । सांस्कृतिकपरम्परायां साहित्य-जीवनकलादर्शनानां तत्वानि सन्निहितानि भवन्ति यत्रातीत-वर्तनानभविष्यकाला: सुसंबद्धा: भवन्ति । पारम्परिकज्ञानेन कवि: महत्वपूर्ण काव्यं रचयति। यथा तुलसीदासस्य सन्मुखे सुदीर्घा रामकाव्यस्य शृंखलासीत्। परम्परा वैयक्तिकज्ञानो-न्मेषे सहायिका भवति न तु बाधिका। परम्पराज्ञानेन कवि: लाभद्वयमवाप्नोति—१. मया किं करणीयम्? २. मदीय-काव्यस्य किं मूल्यं वर्तते ?

कलायां निर्वैयक्तित्वम्-

*(Impersonal Theory of poetry)*

कवि: काव्ये वैज्ञानिकवन्निर्वैयक्तिक: वस्तुनिष्ठो भवति। तस्य कार्यमात्मनिरपेक्षं भवति । इलियटस्य

निर्वैयक्तिकतासिद्धान्तः वर्ड्सवर्थ कालरिज काव्यसम्बन्धिमान्यताविरोधे समजायत। तौ काव्ये भावोद्रेकस्योच्छलनमङ्गीकुरुतः। रोमान्टिकयुगस्य मान्यतासीत् यत् व्यक्तित्वस्याभिव्यक्तिरेव काव्यम् इलियटे— नास्य मतस्य निराकरणं कृतम्।

'कवितायास्त्रयः स्वराः' नामके निबन्धो इलियटेन—

प्रथमस्वरे–

कविरात्मन्येवात्मना भाषते। कविःस्वोद्गारान् संप्रेषणेनान्यं प्रतिन प्रेषयति स स्वयं भारपीडितः सन् स्वभावमुद्गीर्य तेन मुक्तिं वाँच्छति।

द्वितीयस्वरे-

कविना कविता केनापि सामाजिकोद्देश्येन विलिख्यते। मतोरंजनोपदेशव्यंग्यनीत्यादयो विषयाः काव्येऽस्मिन्समापतन्ति अस्मिन्स्वरे कविरन्येन श्रोत्रा सह संवदति।

तृयोयस्वरेः-

कविः स्वयं वक्ता न भवति पात्रमाध्यमेन वदति। अस्मिन् प्रभेदे नाटकानि भवन्ति।

## वस्तुनिष्ठं समीकरणम्–
## *(ObjectiveCorelative)*

इलियटस्य मतमस्ति यत् भावाः, सम्वेदनानि, विचाराः सर्वेऽमूर्ताः भवन्ति अमूर्तस्यानुभूतिरसंभवा, अतः काव्ये भाव-सम्प्रेषणस्यैक एव मार्गो वस्तुसंगठनं वर्तते। काव्येऽमूर्ता भावाः मूर्तीभावमाप्नुवन्ति। मूर्तीभूतैर्भावैः प्रतीकैर्वा सहृदयोऽपि तादृशीमनुभूतिमाप्नोति यादृशी कविना पूर्वमाप्ता। इलियटस्य वस्तुनिष्ठसमीकरणं विभावनव्यापारेण सह साम्यमेति।

## काव्यभाषा विचाराः-

कविः परम्परागतां भाषां परित्यज्य नव्यां भाषामङ्गी करोति। कविकर्म भाषामाध्यमेन सम्पद्यते नवानुभूतीनां कृते नवीनभाषा सक्षमा भवति। अतः कवि परम्परागतया भाषया सह संघर्षं करोति। नवकाव्यस्य कृते कवेः कर्तव्यमस्ति यत् स नवीनानि साधनान्यङ्गीकृत्य भाषामपि नवशक्ति-सम्पन्नां विद्ध्यात्।

काव्यभाषाविषये इलियटस्य मतम् कवेः भाषा युगीनसामान्यव्यवहारभाषया सह इयत्साम्यं विभृयात येन श्रोता पाठको वा कथयेत्यद्यहं काव्येन वार्ता कर्त्तुं प्राभविष्यम् तदेवमेव वार्तामकरिष्यम्। तत्रचासौ भाषायां दान्तेवत्

परिशुद्धिराभिजात्यम्, वर्डसवर्थ इव शक्ति जीवनत्वम् चाभिकांक्षति।

समालोचना:-

इलियटेन कथितम् यत् तटस्थो रागद्वेषविभुक्तो निष्पक्षसमीक्षक एव काव्यसमीक्षां कर्त्तुं क्षमः। समीक्षके विवेकवोधान्तर्दृष्टिसहृदयत्वादयो गुणाः परमावश्यकाः। समीक्षकस्य कार्यं महत्वपूर्णं वर्तते। समीक्षके सूक्ष्मं संवेदनं भवेत्। समीक्षायाः मूलभूतं कार्यं तु साहित्यवोधकरणम्, आस्वाद्य परिशंसनयोराधारनिर्माणं चास्ते। समीक्षको हि मर्मज्ञः, बहुश्रुतः, विवेकपूर्णः, स्वतन्त्रचेता भवेत्। मनोविज्ञान समाजविज्ञानदर्शननीतिशास्त्रमानवशास्त्रेषु तस्य रूचि र्भवेत्।

इलियटः विंशतिशतकस्य समीक्षको वर्तते। तस्य विचाराः भारतीयकायव्शास्त्रविचारैः विशेषतः रससिद्धान्तेनौचित्यसिद्धान्तेन च सह साम्यं धारयन्ति।

# नव्यशास्त्रवादः

पाश्चात्य काव्य समालोचनायां नव्यशास्त्रवादस्य (New-classicism) स्वरूपः ।

यूरोपे-ईसाई धर्मस्य प्रचारेण प्रसारेण च सह साहित्ये नीतिवादस्योपदेशतत्त्वानां समावेश बाहुल्येन संजातः । काव्यानन्दे प्रतिबन्धिते सति 'कलाकलायै' इति सिद्धान्तस्योपेक्षा संजाता तदा काव्यं जीवनस्य कृते प्रभवतीति सिद्धान्तेन काव्यस्य क्षेत्रं संकुचितं जातम् ।

पंचदशशतके ग्रीकसाम्राज्यस्यपतनेन सह 'इटलीदेशे' नवयुगस्य जागरणं समभवत् राजनैतिक जागरणेन सह साहित्येऽपि 'नव्यशास्त्रयुगस्याविर्भावः संजातः । तदा संत फिलिफसिडनी महाभागेन प्लेटोमहाभागस्य काव्य सम्बन्धिनो विचाराः पुनरालोकिताः । बेन जानसनेन काव्यगुणेषु विचारं कुर्वता काव्यविश्लेषणं कृतम् । नवशास्त्रवादस्य सर्वप्रथमः प्रवंतकः बुअलो' महाभाग आसीत् तत्परम्परायां वोल्यू महाभागो वर्तते । अनयोः संस्थापनेव 'नव्यशास्त्रवाद' रूपेण विख्याता जाता । आभ्यां हि काव्यस्य पारम्पारिकं तत्त्वं पूर्णरूपेण समर्पितम् । अरस्तूहोरेसादीनां सिद्धान्तानुसरणं कविकर्त्तव्यतयोपदिष्टम् ।

नव्यशास्त्रवादस्य विचारकाः—

नव्यशास्त्रस्य प्रमुखतमो विचारकः 'बुअलो' वर्तते, अनेन काव्यस्य कृते नूतनकाव्यनियमाः निर्धारिताः । नियमोल्लंघने कविः— दण्डनीयो भवतीति प्रतिपादितम् ।

'बुग्रलो' कथनमेतद् यत् साहित्यस्य विभिन्नेषु प्रभेदेषु विभिन्ना नियमा: प्रवर्तन्ते, तेषां परिपालनेन काव्यमुत्कृष्टं भवति । एते नियमा, होभरवर्जिलहोरेसथियोक्रिटसओविडादीनां रचनामाध्यमेन संप्रकटिता: बुग्रलो कथयति यद् ग्राम्यकाव्यसंवादे वियाक्रिटसवर्जिलौ, शोकगीते ओविड:, व्यंग्यकाव्ये होरेस: त्रासदीकामदोमहाकाव्ये अरस्तूसिद्धान्ता आदर्शरूपेणानुकरणीया: ।

प्रकृतेरनुकरणं नव्यशास्त्रवादस्य मुख्य: सिद्धान्तो वर्तते। प्रकृतिरपि न केवलं जडात्मिका अपितु अरस्तू मतानुगतामानवप्रकृति: काव्येऽनुकरणीया भवति । अनुकरणे यथार्थवादस्य समावेश: समयोचित: । काव्यक्षेत्रे कल्पनानामसंभाव्यघटनानां प्रवेश: सर्वथा वर्जनीय: । काव्ये सद्गुणोपेत: उदात्तभावनापरिपूर्णो नायको निवेशितव्य: । नव्यशास्त्रवादीनां मतेऽतिमानवीयतत्वानां समावेश: काव्ये न करणीय: ।

नव्यशास्त्रवादीनां मते सर्वकालीना: सर्वदेशीया: विषया: काव्ये सन्निवेशितव्या: । देशकालस्थानसीमातीतैर्मानवीय चरित्रैश्चित्रितं काव्यं श्लाघनीयं भवति । ऋतं सत्यान्वितं मानवप्रकृतिपरिपूर्णं सार्वजनीनं काव्यं सत्काव्यम् । नवशास्त्रस्त्रवादिभि: काव्यस्य लक्ष्यमानन्द एवेति स्वीकृतम् । परन्तु सदुपदेशनैतिकगुणावपि काव्यस्य लक्ष्ये भवत इति स्वीकृतम् । यथा वोस्यू: कथयति The aim of the epic is moral instruction disguised under the allegory of Action.

नवशास्त्रवादिनः रचनासंविधाने विविधकाव्यनियमोपदेशं ददति। लेखकेनातिशयोक्तिकथने संयमवता भाव्यम्।

**पर्यालोचनम्**

यद्यपि नव्यशास्त्रवादिनो रचनाविषये नानाकाव्यनियमान् निर्धारितवन्तः। परन्तु तेषां काव्यनियमाः केवलं काव्यस्य बाह्याकारं निरूपयन्ति। ते तु खण्डशः काव्याङ्गानां विवेचनं कुर्वन्ति। तैः समग्रतया काव्यसमालोचना न कृता। अलंकारपरतंत्रास्ते काव्यस्यानुभूतितत्वमपि नोद्घाटिवन्तः। नियमैर्नियन्त्रितस्य काव्यस्य सीमाक्षेत्रमपि संकुचितं जातम्। काव्ये मौलिकतत्वस्याभाव एव संजातः। पद्धतिविशेषनिबद्धेन काव्येन कविप्रतिभायामुन्मेषेऽवरोधः समुपस्थापितः।

**नव्यशास्त्रवादस्य प्रमुखाः सिद्धान्ताः**

क- कलाकृतौ कल्पनापेक्षया भावापेक्षया च बुद्धितत्वस्य महत्वमधिकं भवति।

ख- कविना मानवमनसो मनोवैज्ञानिकाध्ययनं विधेयम्। तथा च नगरस्य राजद्वारस्य वा विषयः काव्ये वर्णनीयः।

ग- विषयप्रतिपादनं व्यक्तित्वरहितं भवेत्।

घ- काव्यस्यपरीक्षणं शिल्पाधारेणोचितं न तु भावाधारेण।

ङ- काव्यस्योद्देश्यम्–परमानन्दः, शिक्षादानं चोभे भवतः।

नवशास्त्रवादस्य सिद्धान्तास्तादृशमनौचित्यं न धारयन्ति ते तु अन्धानुकरणेन विकृताः संजाताः। परिस्थितिवशात् कालवशाद् वा वैपरित्ये जाते सति परवर्तिभिः समालोचकैः नवशास्त्रवादस्य विरोधः कृतः।

## स्वच्छन्दतावादः

अष्टादशशतकस्यान्तिमदशके एकोनविंशशतकस्य चारम्भे नवशास्त्रवादनियमविरोधे यूरोपे स्वच्छन्दतावादः (Romanticism) साहित्यक्षेत्रे समुद्गतः । अस्य प्रवर्तकः 'रूसो' आसीत् । तेन हि परम्परागतसंस्काराणां परिवर्तनाय क्रान्तिकारिविचाराः संप्रकटिताः । १७८७ वर्षस्य फ्रांसीय राज्यपरिवर्तनेन सह साहित्येऽपि स्वच्छन्दतावादस्याधारशिला सुस्थिरा संजाता । राजनैतिकप्रभावेण साहित्येऽपि स्वातंत्र्यस्य दुरूहकाव्यनियमोल्लंघनस्य प्रकृत्यनुरागस्य चोदयः संजातः । यूरोपे राजनैतिकजागरणेन यथा समाजे राजनीतौ च परिवर्तनं कृतं तथैव साहित्येऽपि नवशास्त्रवादीनां परम्परागत नियमोलंघने विद्रोहः समुत्थापितः । ग्रीकसाहित्याधारेण नव्यशास्त्रवादिभिः काव्यं शास्त्रीय नियमेषु निगडितम्, येन हि साहित्यस्यात्मतत्त्वं तिरोहितं संजातम् । छन्दोनियमशिल्पबाह्यालंकार भाषा वैदग्ध्यमोहन विमोहितास्ते साहित्यस्योद्देश्यं समाजोत्थानमेव स्वीकुर्वन्ति स्म ।

अस्यैव नवशास्त्रवादस्य प्रतिक्रियास्वरूपे स्वच्छन्दतावादस्योदयः संजातः । साहित्यमनीषिभिर्नियमपरम्पराडम्बर विरोधे स्वस्वरः समुद्घोषितः नियमादर्शसीमाबन्धनेभ्यः काव्यमुन्मुच्यान्तरिकप्रेरणाभावाधारे तस्य प्रतिष्ठापनं कृतम् । राजनैतिकसामाजिकधार्मिकक्षेत्रेषु हॉब्सलॉक रूसो प्रभृतयो विचारका राज्यक्रान्तिकार्ये संलग्ना आसन् तेषां प्रभावेणापि साहित्यकाराः प्राचीन काव्यनियमोलंघने तत्पराः समभवन् ।

तदेव स्वच्छन्दतावादः साहित्यक्षेत्रे समजायत ।

**स्वच्छन्दतावादस्यार्थः स्वरूपश्च—**

आंग्ल रोमांटिसिज्म शब्दस्य रूपान्तरितः शब्दः स्वच्छन्दतावादो वर्त्तते, उक्तशब्दस्यार्थः सदैव परिवर्तितोऽभवत् ।

अस्य विभिन्ना अर्थाः काल्पनिकासत्योपन्यासादय संजाताः । फ्रांसदेशे सर्वप्रथमं-साहसशीलभावनाशीलकल्पनाशीलार्थकतयासौ शब्दः साहित्येऽपि स्थानमवाप, अधुना काव्यस्योन्मुक्ता स्वच्छन्दाभिव्यक्तिरेव स्वच्छन्दतावादशब्दस्यार्थो दृष्टिपथमवतरति ।

स्वच्छन्दतावाद परायणः कविर्जगतो दूरे वसन्नेवात्मानन्दमवाप्नोति । दुःखवादप्रभावितेन दुःखे निवसतापि तेन सुखावाप्तिरनुभूयते । अत एव स्वच्छन्दतावादे व्यक्तित्वस्य प्राधान्यं भवति । स्वच्छन्दतावादपरः कवि नियमोलंघनं परम्परा समुन्मूलनं च विधाय यथार्थस्य समाजस्य च विरोधं करोति ।

**स्वच्छन्दतावादस्य वैशिष्ट्यम्—**

१. विद्रोहस्य प्रवृत्तयः— फ्रांसीसीराज्यक्रान्तिकारणात्साहित्ये स्वच्छन्दतावादस्य स्वरूपो विद्रोहात्मको वर्तते । अस्मिन् साहित्ये अत्याचारस्यानाचारस्य विरोधेन सह नीतेः-धर्मस्य साहित्यिकपरम्पराया अपि विरोधः समवलोक्यते । स्वच्छन्दतावादेन काव्यस्य भाषाशैलिविषयाः सर्वे विरोधिताः

कुलीनवर्गापेक्षया सामान्यजनानां चरित्रमत्र वर्णितम् ।

२. कृत्रिमत्वस्य परित्यागः— स्वच्छन्दवादिभिः कृत्रिमाडम्बरं परित्यज्य काव्ये सहजस्य सरलस्य प्राकृतिकस्य स्वरूपस्यावस्थानं विधीयते । लिरिकलवेलेड्सस्य भूमिका रोमांटिसिज्मस्य सिद्धान्तपत्रमस्ति, मिथ्याहंकारदम्भविनिर्मुक्ता एतादशाः कवयः स्वाभाविकेषु शब्देषु स्वभावोद्गारभभिव्यंजयन्ति स्म ।

३. मध्ययुगस्य प्रत्यावर्तनम्—अष्टादशशतकस्य साहित्यकाराः स्वयुगस्य बौद्धिकातंकेन विवेकाभिमानेन संत्रस्ताः मध्यमयुगं प्रति समाकृष्टाः संजाताः होरेस वालपोल पर्सी कालरिज शैली कोट्सादयः मध्ययुगस्य साहित्यशिल्पेन पूर्णतया प्रभाविता आसन् ।

४. कल्पना प्राधान्यम्—स्वच्छन्दः कविः अस्मात् कटुकठोराज्जगतो दूरे सन् नवीनमनुपमं विषयं प्रति समाकृष्टमना भवति । स वास्तविकजगतः पलायनं विधाय कल्पनालोके विरहति । तेषां मस्तिष्कं सूक्ष्मेषु भावेषु विचरत् सूक्ष्मातिसूक्ष्मभावान् सौन्दर्येणाभिव्यंजयति स साधारणेषु पदार्थेषु दार्शनिकं तत्त्वमन्वेषयति । कल्पनयासौ रहस्यालोकेन प्राकृतिके प्रतिपरिमाणौ परमात्मतत्त्वं विलोकयति ।

५. अद्भुतत्वम्—कल्पनालोके विचरतामेतादृशानां कवीनां मनः- अद्भुतविषयेषु रमते । अतिमानवयीतत्त्वं हि स्वकुरूपतां

यान्त्रिकतां च परित्यज्य एषां काव्ये स्वाभाविकरूपेणाकर्षकं सदभिव्यज्यते । अनेन काव्यं प्रभावान्वितं जातम् । पाठकोऽपि कल्पनालोके विचरति । वाट्सः प्रवृत्तिमेतां अद्भुतस्य पुनर्जागरणमिति कथयति – (Renaissance of wonder)

६. व्यक्तितवादः — वैयक्तिकत्वबोधः स्वच्छन्दतावादस्य प्रमुखा प्रवृत्तिः । अस्यां हि कविः स्वदृष्टिरुचिभावनाभ्यः प्राधान्यं ददाति । प्रबन्धकाव्ये नायकः स्वात्मकेन्द्रितो भवति । गीतिकाव्ये कविः स्वौदासिन्यम्, निराशाम्, वेदनाम्, व्यथाम् च चित्रयति । काव्ये विवेकस्य स्थाने संवेगा, भावुकता, आकांक्षा चादर्शरूपेण समुपस्थापयति कविः । कविः स्थूला-पेक्षया सूक्ष्मेषु भावेषु विचरति । व्यक्तिवादस्य प्रधान्येन कविः-भावोन्मादेषु विचरणं करोति । एतद्विषये क्षुब्धेन गेटे महाभागेन निगदितम्

(Romenticirmwas diseabed)

७. सौन्दर्यमैन्द्रियवेद्यत्वं च — स्वच्छन्दतावादे सौन्दर्य प्रेम, सौन्दर्यंप्रति जिज्ञासा चेति द्वयं मुख्यं तत्त्वम् । एषां काव्ये सर्वत्रैव सौन्दर्यभावना समवलोक्यते ।

शैले सम्पूर्णां प्रकृतिं सौन्दर्यवतीमनुमोदयति । कीट्स महाभागस्तु कथयति काव्यस्यैक एव सन्देशो यत् सौन्दर्यतत्त्वं तु शाश्वतं चिरन्तनं सर्वोच्चपरमसत्यं वर्तते—

Beauty is truth, truth Beauty, that is all ye Knowon earth and all ye need to Know.

कीट्स: कथयियत् संवेगानां शृंखलेव जीवनम् । काव्यस्य प्रतिपत्तौ रूपरसगन्धजन्यानन्द: समुपलभ्यते ।

८. प्रकृतिप्रेम— अष्टादशशतकस्य कवि: नागरोऽपि प्रकृति चित्रणं करोति स्म । किन्तु तत्र प्रकृति: सुव्यवस्थितासीत् । परञ्च एकोनविंशशतकस्य कवि: प्रकृतेरुन्मुक्ते प्राङ्गणे स्वच्छन्दं विहरति प्रकृत्या सह तस्य कवेरविच्छिन्नं प्रेम आसीत् । तस्य चेतसि प्रकृति: व्याप्ता सती विहारं करोति स्म वड्ँसवर्थ: निगदति– The Sounding Catarct

Haunted me Like a passion.

९. जगत: पलायनम् —स्वच्छनन्दतावादकवि: संसारे संकीर्णतां कठोरतां चावेक्ष्य स्वप्नलोके विचरति । ऐन्द्रिय जगत: सौन्दर्येण प्रेरणां गृहीत्वा प्राकृतिक सुषमायां रमते । इन्द्रधनुषो विविधवर्णेषु स्फूर्ति गृह्णाति ।

१०. स्वदु:खानुभूति:– कवि: सांसारिक दुखेषु-सुखानुभुतिं करोति काव्ये स्वकीय व्यथाकुण्ठा निराशा हताशातृप्ताकाक्षानां चित्रणं करोति । स्वपीडानरतावेवानन्दमनुभवति ।

११. संगीतप्रियता– स्वच्छन्दकवि: काव्ये गेयतत्त्वमपि विशेषं मनुते । गानेन हृदयोद्गारा:– निष्कपटभावेनाभिव्यक्ता: भवन्ति । स्वच्छन्दकाव्येऽन्त:प्रेरणा, भावबाहुल्यम्, निर्बाध प्रवाहश्चावलोक्यते ।

# यथार्थवादः

यथार्थवादस्य साहित्यादर्शाः—

कस्यापि वस्तुनः पदार्थस्यानुभूतेर्वा यार्थातथ्येन निरूपणमेव 'यथार्थवादः', कविः स्वकल्पनया प्रतिभयादर्शेन वा यत् मनोनुकूलं वर्णनं करोति स आदर्शवादः यद् वस्तु यादृशं तस्य तादृशमेव वर्णनं यथार्थवादः।

यथार्थवादान्दोलनदर्शनस्योदयः यूनाने पंचमशतके संजातः किन्तु साहित्यक्षेत्रे-अस्योत्थानमाधुनिक रूपेण एकोनविंशशतके समभवत्। वर्ग संघर्षेण संप्रेरिताः साहित्यकाराः काव्ये यथार्थ चित्रणं कृतवन्तः यथार्थवादीनां मतमस्ति यद् वस्तु यादृशं तस्य तादृशं निरूपणमेव श्रेयस्करम्। अस्मिन्संसारे भयजुगुप्साशोकभरितं प्रेमानन्दहासशान्तान्वितं चोभय विधं तत्वं विलोक्यते। मानवस्य धारणेयं वर्तते यत्

१. परितो विस्तृतं यत्-जगत् तस्य निर्माणे विनाशे परिवर्तने चाक्षमः मानवः।

२. अस्य जगतः दर्शनं ज्ञानं तदेव सम्भवम् यदा निरपेक्षदृष्ट्या तस्याध्ययनं निरीक्षणं च भवेत्

३. बुद्ध्या गृहीतेन ज्ञानेन मानवः व्यक्तिगतरूपेण सामुहिकरूपेण च सर्वासु क्रियासु प्रवर्तते।

मानवे यथार्थवादस्यैते आधारस्तम्भाः सन्ति। अत एव साहित्यकारः मानवजीवनस्य समाजस्य प्रकृतेश्च यथार्थचित्रणं करोति। स काल्पनिक जगतः काव्यविषयं न गृह्णाति

वास्तविक जगत एव गृह्णाति। इमर्सेन कथितम्– 'अहं दूरस्थं काल्पनिकमहत्त्वं न वाँच्छामि अहं तु साधारणमेवाङ्गी करोमि अहं तु सुपरिचितनिम्नचरणेषु तिष्ठामि'

यथार्थवादः जगति विद्यमानं कलुषं कलंकं च नाच्छादयति तस्यापि चित्रणं करोति। यथार्थवादः भूभूमिकायामुदेति तत एव प्रेरणाः गृह्णाति।

मनोविश्लेषणपरो यथार्थवादः

मार्क्सस्य साम्यवादेन सह यथार्थवादस्योत्पत्तिर्जाता। द्वाभ्यां महायुद्धाभ्यां जर्जरिते जगति यथार्थवादः समाजेन स्वीकृतः। यथार्थः मानसिकं सत्यं नाङ्गीकरोति। जगति यत्किंचिद्विलोक्यते यथार्थवादे तस्यैव तद्वत् चित्रणं भवति। अत एव यथार्थवादिभिरवचेतन मनसि विद्यमानाः कुण्ठाः निराशाः वर्जना अनास्थाश्च नष्यन्ते।

सामाजिक यथार्यवादः

सामाजिक यथार्थवादः युगस्य समालोचनमेव न विदधाति अपितु क्रान्तिकारिसृजनस्याधारभूमिकामपि प्रस्तौति, 'गोर्की' रूसीलेखकेन सर्वप्रथमं यथार्थवादस्य व्याख्या कृता-

"Socialist realism proclaims that life is action, creativity, whose aim is the unfettered development of man's most Valuable individual abilities for his victory over the forces of

Nature for his health and longevity for the great happiness of living on earth."

समाजिक यथार्थवादीनां मतमस्ति यत् जनशोषणात्मिके यमन्यायपूर्णा समाजिकी दुरवस्थाधिकसमयं यावत् स्थातुं न शक्यते प्रगतिशीलाः जनास्तामवश्यमेव विनाशयिस्यन्ति। उत्साहपूर्णोऽयं स्वरः मानवचेतसि ज्ञानालोकं प्रज्वाल्य तं जनमास्थावन्तं वास्तविके जगति सुखेन विहरणक्षमं विदधाति।

'राल्फ फाक्स' महाशयेन निगदितम् यत् तद् यथार्थ चित्रणं भवति यस्मिन्नान्तरिकवहिरङ्गयोर्द्वयोरेव समावेशो भवेत्। सत्ये यथार्थवादे वाह्यजगतः चित्रणेन सह मानसिक वृत्त नामपि चित्रणं भवति। ये यथार्थवादिनः केवलं वीभत्सानां कलुषितानां च भावानां चित्रणं कुर्वन्ति ते नास्ति सत्याः यथार्थवादिनः अत एव वॉलजाक' स्येकाङ्गिचित्रणम् वर्तते यतोहि तेन युगोनसमस्यानां घृणित एव स्वरूपः समुपस्थापितः युगस्याशावादयथार्थस्तु नैव चित्रितः। वास्तविको यथार्थवादी कविः यथार्थेन सहादर्शमपि वर्णयति सत्ये यथार्थवादे कलाकारः निराशां परित्यज्याशान्वितो भवति। स संसारस्य नूतनं स्वरूपमभिवाँच्छति। अत एव यथार्थवादस्य सर्वोत्कृष्टः कलाकारः 'जोलो' कथयति यत् 'कला' जीवनस्येकं दृष्टिकोणं वर्तते या मानवीय प्रवृत्तीनां माध्यमेनाभिव्यज्ते। समाजवादिनः दृष्टिःसमाजस्य कृते परमोपयोगिनी भवति। इयं दृष्टिःछायाकार Photographer इव केवलं चित्रं नावतारयति किन्तु तस्मिन् चित्रे प्राणप्रतिष्ठापनमपि

विदधाति । कविः आदर्शे काल्पनिकोदात्तभावानां प्रतिबिम्बनं विलोकयति, जगति परिव्याप्ता क्लेषपीडाऽन्यायशोषणहिंसन व्यभिचारकुप्रवृत्तयः परिणामे सद्वृत्तिभिरवश्यं विनाश्याः भविष्यन्तीति मतमादर्शवादस्य अत एवादर्शवादकविः स्व काव्ये अन्यायोपरि न्यायस्य विजयचित्रणं विदधाति । मानवस्य सद्वृत्तिजागरणं कृत्वा सन्मार्गे संप्रेषणमादर्शवादस्य लक्ष्यम् । साहित्ये वर्णितानां विषयाणामुदात्ततारूपेण चित्रणं मानव-जीवनस्य कृते महदुपकारकं भवति आदर्शवादस्य विचारधारा यथार्थेन जगता सह सम्बन्धं विहायास्य संसारस्य स्वरूप परिवर्तने प्रयतते । आदर्शवादो हि जीवनोपक्षयोच्चस्तरीय-कल्पितजीवनस्य स्वरूपं प्रदर्शयति । उच्च स्तरीय जीवनमपि यथार्थं जीवने निर्भरम् परन्तु यथार्थापेक्षया भव्यतम जीवनचित्रणं यथार्थवादस्य कार्यं वर्तते । यथार्थे जीवनस्योदा-त्तीकरणमेवास्यलक्ष्यम् ।

## विवेचना

यथार्थवादः जीवनस्य याथार्थ्यमवहेल्य कल्पनालोके विचरति । यथार्थं चित्रणं विनाऽदर्शवादस्य नास्ति किमपि मूल्यम् सैद्धान्तिक मात्रमेवास्य विवेचनम् ।

वैचारिक रूपेणादर्शवादस्य पर्याप्तं महत्वं वर्तते ।

प्राचीनसाहित्ये सर्वत्रैवास्य प्रसारो वर्तते, लौंजाइनस्योदात्ततावादोऽपि आदर्शवाद सिद्धान्तमनुसरति, आदर्शवादेन मानवभावनोन्मुखोकरणे महत्त्वपूर्णं कार्यं कृतम्।

अतियथार्थवादोऽपि हानिकारः। आदर्शस्य काल्पनिकं मनोराज्मपि सुखाभासमात्रमेव। यथार्यादर्शावुभावेव परस्परं सापेक्षौ वर्तेते। विनायाथार्थेनादर्शस्य विनादर्शनेन यथार्थस्य च नास्ति कुत्रापि सदुपयोगः। दिवास्वप्नं विलोकन्नादर्शः मानवं निष्क्रियं विदधाति अतियथार्थवादश्च मनसि घृणां जुगुप्सां च जनयति।

अतः यथार्थे उच्चतराणामादर्शनां संमिश्रणमावश्यकम्। यथार्थवादे केवलमनुकरणमेव न भवितव्यम् तेनोच्चतरोद्देश्य पूर्तये प्रयतितव्यम् तदेव यथार्थवादस्य साफल्यं भवति।

# प्रतीकवादः

## पाश्चात्य काव्यसमालोचनायां प्रतीकवादस्याधाराः

प्रतीकवाद 'Symbolism' शब्दस्योपयोगः तद् दृश्यं (गोचर) वस्तु विषये भवति-येनादृश्यस्य (अगोचरस्य) प्रतिविधानं विधीयते । अमूर्तस्यादृश्यस्यवस्तुनः मूर्तरूपेण दृश्यरूपेण च व्याख्यायै प्रतीकानां प्रयोगो विधीयते ।

## पारिभाषिकरूपेण-प्रतीकवादः—

प्रस्तुतस्याप्रमेस्यागोचरस्यामूर्तस्य वस्तुनः प्रतिनिधि रूपेणावस्थितः प्रस्तुतगोचरवस्तु विधानमेन प्रतीकः, येन देशकाल सांस्कृतिक मान्यताद्वारास्माकं मनसि चिरसाहचर्य-कारणात् तीव्रभावोद्गमो जायते । प्रतीकवादे अमूर्तस्य मूर्तीकरणं भवति ।

## प्रतीकवादस्य समारम्भः

पाश्चात्य साहित्ये कलासु च प्रतीकवादस्याधुनिकयुगः फ्रांसदेशे समुद्भूतः । प्रतीकवादः यथार्थवादस्य विरोधी वर्तते । अस्यवादस्य प्रसारः इंगलेण्ड जर्मनामेरिका देशेषु समजायत । लाफोज रिम्बो मालर्मे महाभागैर्विश्लेषणं विधा-यास्मिन्नाध्यात्मिक भावानां संस्थापनं विहितम् । कविभिरस्मि-न्प्रतीकवादे सौन्दर्यादर्शयोः समोवशः कृतः ।

रहस्यवादतत्त्वमपि प्रतीके समाविष्टम् । प्रतीकानां प्रयोगो 'वर्गसाँ' महाभागस्य दर्शनेऽपि विलोक्यते ।

एकोनविंशशतकस्योत्तरार्धे, आदर्शवादान्दोलनेन सहास्य

प्रवृत्तिदृष्ट्याथभवतरति । प्रतीक साहाय्येन कल्पना सूक्ष्मा संक्षिप्ता सहृदयग्राह्या भवतीति हेतोरभिव्यंजना वादेन सह प्रतीकावादस्य साम्यं विलोक्यते । कविर्व्यक्तिगतरूपेण प्रकृति चित्रणं करोति—इत्यस्मात् कारणात् स्वच्छन्दतावादेऽपि प्रतीकाः प्रयुज्यन्ते ।

प्रतीकवादस्य क्षेत्रं व्यापकमस्ति जर्मन कवि रिल्के, रूसी लेखको 'ब्लाक':, आइरिस कविः 'कीट्स':, अमेरिका कवयः 'हैत्थार्नवाल्ट ह्विटमैनादयः' प्रतीकमाध्यमेन रचनाश्चक्रुः । परश्चास्य प्रमुख कविः 'मालार्मे' एव वर्तते ।

कस्याप्येकस्य व्यक्तस्य पदार्थस्य वस्तुनो वा रूपगुण क्रियासम्बन्धेनान्यस्याव्यक्तस्य पदार्थस्य वस्तुनो वाभिव्यक्तिरेव प्रतीकस्य कार्यम्—उदाहरणरूपेण—प्रतीकमाध्यमेन 'नदी' सहृदयत्वं तरलत्वं गहनत्वमभिव्यंजयति, एवं हि पर्वतः—दृढत्वगाम्भीर्योच्चत्वादिगुणाभिव्यंजको भवति ।

प्रतीकभेदाः—सामान्यतः प्रतीकस्य द्वौ भेदौ—

१. साहित्यिकप्रतीकाः
२. वैज्ञानिकप्रतीकाः

साहित्यिकप्रतीकेषु भावात्मकस्य व्यंजनात्मकस्य च साम्यस्यावधानमवश्यकम् । वैज्ञानिके प्रतीके केनापि प्रतीकेन कस्यापि विशिष्टपदार्थस्य विम्बस्य विचारस्य वाभिव्यक्ति जायते ।

साहित्ये प्रतीकानां प्रयोगो विभिन्नरूपेण भवति, यथा—

१. सर्वजीववादरूपेण—सर्ववस्तुषु जीवकल्पनारूपेण।

२. रूपकेन।

३. उपमया।

४. चरित्र प्रातीनिध्येन। सर्वे प्रतीका अव्यक्तं व्यक्तीकुर्वन्ति।

प्रतीकानां कार्याणि

साहित्ये प्रतीकमाध्यमेन नानाकार्याणि जायन्ते यथा—

१. विषय विवेचनम्—यस्य विषयस्य प्रत्यक्षरूपेण व्याख्यानं न भवति प्रतीकद्वारा तस्य विवेचनं विधीयते, यथा—रहस्यवादिनोऽव्यक्तस्याभिव्यक्तिं प्रतीकमाध्यमेन कुर्वन्ति।

२. सुप्तानां दमितानामनुभूतीनां जागरणम्—मानव-मनसि सुप्ता दमिताश्चानुभूतयः प्रतीकैर्जागरूका भवन्ति। केनाप्यन्येनप्रकारेणानभिव्यक्ताः सुप्ताः दमिताकामादिभावाश्च प्रतीकैः साफल्येनाभिव्यक्ता भवन्ति।

अलंकारमाध्यमेन

काव्यस्य कलापक्षोऽपि प्रतीकैलंक्रियते प्रतीकमाध्यमेन वर्णिते विषये शोभातिशयिता स्वयमेवोपजायते। निम्नाङ्कित-रूपेण काव्ये प्रतीकानां सदुपयोगो भवति।

१. अनुभूतीनां विस्तृताभिव्यक्तये।

२. मनोभावानामभिव्यंजनाय।

३. अव्यक्तस्य व्यक्तीकरणाय, अमूर्तस्य मूर्तीकरणाय।

४. स्ववैदुष्यस्योद्घाटनाय।

५. समासेन सौन्दर्यस्याभिव्यक्तये ।

६. अभिव्यंजन तत्वस्य नव्यप्रयोगाय ।

७. काव्ये प्रभावोत्पादनाय ।

**काव्येप्रतीकानांमहत्त्वम्**

मानवजीवनेऽनुभावानां वैविध्यं विशदरूपेण वर्तते । भाषागतशब्देषु तादृशं सामर्थ्यं नास्ति येन मानवः शब्दैरेव सर्वंवस्तुगुणानुभूतिभावनानां परिज्ञाने समर्थो भवेत् यत्र भाषागतशब्दा भावप्रकाशनेऽक्षमा भवन्ति, तत्र प्रतीकद्वारा भावाभिव्यक्तिर्जायते, गुणानुभूतिभावप्रकाशने प्रतीकाः पूर्णरूपेण सक्षमाः भवन्ति मानवीयभावानामनुभूतीनां प्रकाशने प्राकृतिकः प्रतीकाः सार्थका जायन्ते ।

पश्चात्यचिन्तनधारायाः विस्तृते क्षेत्रेप्रतिकवादस्य प्रभावो विलोक्यते समाजे धर्मे संस्कृतौ च प्रतीकाः सूत्ररूपेण स्वप्रतिक्रियामभिव्यंजयन्ति, व्यावहारिके जीवनेऽपि तेषां महत्त्वमस्ति यथा राष्ट्रध्वजेनैक्यस्य, श्यामवर्णेन शोकस्य, क्रास चिन्हेन बलिदानस्य, कर्णशब्देन दानस्याभिव्यक्तिर्जायते प्रतीकवादस्य सम्बन्धः पूर्णाभिव्यक्तया सहवर्तते । अस्य विस्तृतम् क्षेत्रमस्ति ।

प्रतीकवादान्दोलनेन यथार्थवादस्य नग्नचित्रणानामभिव्यक्तिरवरुद्धा । अतियथार्थवादस्य नग्नचित्रणं-प्रतीकैराच्छादितम् । यथार्थवादादर्शवादयोर्मध्ये प्रतीकवादः सामंजस्यं समुपस्थापयति, आदर्शवादस्य कल्पना यथार्थवादस्य नग्नता च प्रतीकमाध्यमेन नियन्त्रिता सती काव्यस्योत्कृष्टं तत्वमुद्घाटयति ।

# कलाकलायै सिद्धान्तः

कलानां मुख्यतस्त्रय उद्देश्या भवान्ति—

१. आनन्दोपलब्धिः ।

२. नैतिकसदाचार प्रचारः ।

३. यथार्थरूपेण कलासौन्दर्यानुभूतिः ।

पाश्चात्य काव्यशास्त्रे द्वितीयेन दृष्टिकोणेन कला जीवनस्य कृते; तृतीयेन दृष्टिकोणेन कलाकलायै इति द्वयोः सिद्धान्तयोरुद्गमो जातः ।

प्रारम्भकाले कलाक्षेत्रे नैतिकतावादस्य प्रभुत्वमासीत् युनानीविचारकैः कलायाः परमलक्ष्यं नैतिक सदाचारणमेवाङ्गीकृतम् । 'दान्ते' कथयति यन्नीतिरूपदेशश्च काव्यस्य निकटवर्तिनावास्ताम् 'सरफिलिफसिडनी' मते सन्दर्शानुरूपिण्येव कला शोभते ।

'वेन जानसनेन' निगदितम्-यत् श्रेष्ठजीवनतत्वस्य निर्धारणमेव कवीनां मुख्यं कर्म । वर्ड्सवर्थं विचारे कविरूपदेशको भवति । मैथ्यू आर्नाल्डस्तु नीतिविरुद्धकाव्येन जीवने विद्रोहो भवतीति प्रतिपादयति, अस्य मतस्य प्रबलौ समर्थको 'रास्किलटालस्टायौ' वर्तेते टालस्टायानुसारं कलावस्तुनो मूल्यं तात्कालिकधार्मिकचेतनाधारेण निर्धारयितव्यम् । धार्मिक चेतनातत्वतु मानवेषु पारस्परिकमैक्यं, मानवानामीश्वरेण सहैक्यं च वर्तते । रास्किलस्तु पूर्णतः-नैतिकतावादसमर्थक आसीत् तेन कथितम्—

It is witness of the glory of God.

काव्यसौन्दर्यस्यास्वादनं स एव सौभाग्यशालिनः कर्तुं शक्यन्ते ये परिशुद्धान्तःकरणाः भवन्ति । तन्मते कविकर्म मनोरंजनात्पृथक् गभीरं वस्तु वर्तते ।

Art properly so called, is not recreation it cannot be learnd at spare moments it must be understood and takenseriously.

एतेषां विचाराणां प्रतिक्रियास्वरूपे कलाकलार्थै इति सिद्धान्तस्याविर्भावो जातः । यतोहि 'कलाजीवनस्यकृते' इति सिद्धान्ते स्पष्टरूपेण न्यूनत्वं वर्तते । अस्मिन् सिद्धान्ते नास्ति कलायाः किमपि स्वतन्त्रमस्तित्वम् । अत्र कला दासीभूतोपदेश परतन्त्रा जाता । कलासर्जने नीत्यत्योः प्रश्नो व्यर्थं एव यतोहि सौन्दर्याध्यात्मयोः साहचर्यं कुतः सम्भाव्यते ?

नैतिकतत्वमपि समाजसापेक्षं वर्तते तस्यस्वरूपे युगाधारेण परिवर्तनं तु भवत्येव । अद्य यानिनैतिकताचरणानि तान्येव कालान्तरेऽनैतिकानि भवितुं शक्यन्ते । एतद्विपरीतं वर्तमानानैतिकता भविष्यकाले नैतिकता भवितुं शक्यते । नीत्युपदेशसदाचाराः कलागुणाः स्वीकर्त्तुं न शक्याः । कलाकारोपदेशकयोः कर्म विभिन्नं भवति, उपदेशकः समाजे नैतिकाचरणं बलात्समारोपयति, कलाकारस्य कार्यमभिव्यं-जनमेवास्ते । कलाकारस्तु यत्पश्यति, शृणोति यच्च तेनानुभूयते तत्सर्वं ताटस्थ्येनाभिव्यनक्ति, । 'कलाकलार्थै'

सिद्धान्तेऽपि कविरन्तरंगेन भावेनाभिभूतः सन् बाह्य संसारे सर्वथैव विरक्तो भवति । अत एवायमपि सिद्धान्तः साहित्यस्य कलाकारस्य स्वयं कलायाश्च कृते धातकः संजातः । सिद्धान्तेऽस्मिन् सौन्दर्यानुभूतिः कलायाः प्रमुखं कर्म परञ्च कालान्तरे कुत्सितभावसृजनमेव कवीनां मुख्यं कर्म संजातम् ।

यदा समाजे साहित्ये च नैतिकंमूल्यं विशृंखलितं जातं तदा कविरात्मकेन्द्रितो भूत्वा कलावादेन पूर्णतया प्रभावितः सन्नात्मस्थदृष्ट्या 'कलाकलायै' भवतीति सिद्धान्तं प्रतिपादितपादितवान् । एतद्विषये हि्स्लरमहाभागेन निगदितम्

Art selfishly occupied her own perfection only having no desrire to teach, seeking and finding the beautiful in all conditions and all times.

'आस्कर वाईल्ड' महाशयेनास्य पूर्णतया प्रवर्धनं कृतम् । हिव्सलरेण राम्किनस्यविरोधे कथितं यत् कलाया लक्ष्यं तु न निर्धारयितव्यम् । कलाकार्यं तु जीवनेन निरपेक्षितं भवति । नीतेरुपदेशास्तु धर्मविषयाः न तु कलायाः विषयाः कलावादि विचारकाणां मते भावनान्वितायाः कलायाः सदुपयोगस्तु मनोभावानां सौन्दर्यानुभूतिरेवास्ति जे. ई स्मिन्गार्नेन कलाकलायै सिद्धान्तविषये कथितम्-'शुद्धकाव्येसदाचरणदुराचरणयोरन्वेषणं तथा यथा रेखागणितस्य समत्रिकोणत्रिभुजे सदाचरणस्थापनं समद्विबाहौ त्रिभुजे दुराचरण स्थापनम्' ।

'ब्रेडले' सौन्दर्यमानदण्डेन कलाक्षेत्रं निर्धारयति। कलाक्षेत्रं पूर्णंस्वतन्त्रं जगन्निरपेक्षितं भवति नास्त्यत्र नीतेरवकाश :— Its nature is to be not a part nor yet a copy of the real world but a world in inself, independent complete, autonomous'.

'स्पिन्गार्नेण' कलाप्रयोजनविषये स्पष्टरुपेणोल्लिखितम् धर्मदर्शननैतिकादिभिः सह नास्ति-कलायाः कोऽपि सम्बन्धः सौन्दर्यसृजनमेव कलाकाय तदेवोद्देश्यम्।

सौन्दर्यं सौन्यर्यानुभूतावेव निवसति-सौन्दर्यं नास्तिकोऽपि गुणः तत्तु प्रभावमात्रम्। कलाकारस्य कार्यं तु सौन्दर्यानुभूतेराविष्कार एव।

जर्मनदार्शनिक 'काण्ट' महाभागस्य सौन्दर्यस्य नास्ति बाह्यमस्तित्वम् सिद्धान्तानुसारं 'क्रोचे' महाशयेन निगदितं यत् कलासृजनं केवलमाध्यात्मिकं कार्यमभिव्यंजनातिरिक्तं काव्यस्य नास्ति कोऽप्यपर उद्देश्यः। नैतिक क्षेत्राच्च कलाक्षेत्रं सुदूरं वर्तते।

एवमेवांग्लकविः 'ए. सी. स्विनवर्गः', समालोचकः 'वाल्टरपेटरेः', अमेरिका-साहित्यकार 'एडगर एलेन पोनादयः' सर्वे सत्यनैतिकता—धर्मराजनीतिदर्शनादिभ्यः पृथगेव कलाक्षेत्रं निर्धारयन्ति। सौन्दयसृजनमेव कलाकार्यं तदेव परमोद्देश्यम्।

'वाल्टर पेटरः' कथयति यत् कलायाः साध्यं कलैव

भवति तस्या नास्ति बाह्यं किमपि प्रयोजनम् ।

"To treat life in the spirit of art is to make life a thing in which means and end are identified."

'कलाकलायै' सिद्धान्तेन शुद्धकविता महत्त्वमुपपादितम् । 'एम. ब्रेमोण्ड' मते परिशुद्धेन काव्येन पाठकानां चेतसि भक्त इवालौकिकानन्दस्य स्थितिः समुत्पद्यते । 'मिडिल्टनमरे' कथयति यत् परिशुद्धं काव्यं तत् येन कवरेनुभवाः पाठकानां मनसि यथावद्रूपेण समुपस्थाप्यन्ते । एवं क्रोम्बीविचारे—शुद्धकाव्ये काव्यस्य मूल्यांकनं नैतिकाधारेण सत्येनोपयोगिदृष्टिकोणेन न विधीयते । प्राँस्कर वाइल्डः कथयति यत् कलायाः लक्ष्यमनुभवस्य फलं नास्ति स्वयमनुभूतिरेव कला । भावः भावस्य कृते भवति ।

Not the fruit of experience, but experience is the end...... Emotion for the sake of emotion is the aim of art.

अनेन स्वकीये निबन्ध The decay of lying मध्ये कथितम् यत् कविः—कलावस्तुविषये निरपेक्षो भवेत्

विषयः कीदृशोऽपि भवेत्— असत्यमनैतिकमश्लीलं हानिकरमपि विषयं कलाकारः सौन्दर्यानुभूतियोग्यं विधातुं यदि क्षमस्तदा सा कलैव भवति । संरचना कुशलतया कला समुत्पद्यते, बाह्यकारणानि तत्सिद्धौ नोपयुक्तानि ।

'थ्योफाइल गौतिये' महाभागस्य 'इनैमेल्स एण्डकैमियोज:' ग्रन्थे 'कलाकलायै' सिद्धान्तस्य विस्तृतं वर्णनं वर्तते। यत्र विषयवस्त्वपेक्षया शिल्पविधाने रूपनिर्माणे चाधिकं महत्वमुपपादितम्। तेन कथितम् विशुद्धा सम्पूर्ण शैली, उपयुक्त शब्दान्वेषणम्, स्वान्तःसुखाय लेखनम्, कस्याप्यन्यन्यस्याप्रवाहः, यदा कदा भद्रजनानां चेतः संक्षोभनम् कलाकारस्य कार्यं भवति।

'कलाकलायै' सिद्धान्तस्य द्विविधो समर्थको वर्तते। प्रथमः– आत्माभिव्यक्तिरेव कलाया लक्ष्यम्। द्वितीयः– कलाकारस्य लक्ष्यं सौन्दर्यानुभूतेः प्रस्तुतीकरणम्। एवं कलाया परमोद्देश्यमानन्दावाप्तिरेव वर्तते। आत्माभिव्यंजनं सौन्दर्यं च साधनमात्रमेव।

'कलाजीवनस्य कृते' सिद्धान्ते दोषाः सन्ति। यतोहि काव्यस्य लक्ष्यं शिक्षादानं, नैतिकसदाचरणानुसरणमेव नास्ति। एवं 'कलाकलायै' सिद्धान्तेऽपि दोषाः सन्ति–यतः काव्यस्य लक्ष्यं निरर्गलत्वं जीवनविरुद्धाचरणं च न भवति। यद्यपि मानवजीवनचरित्रचित्रणमेव कलेति कथयितुं न शक्यते, जीवन क्षेत्राद् बहिस्कृत्य पृथग् रूपेण कलाक्षेत्रस्य निर्धारणमपि नोचितम्। तदपि सिद्धान्ताङ्कुशेन विमुक्ता कला सूक्ष्मातिसूक्ष्म सौन्दर्यमभिव्यंजयितुं क्षमा। अतः स्पष्टं यद् सिद्धान्तद्वयमेतदतिवादग्रहग्रस्तं वर्तते। कलाकारः स्वकीयकृतौ मानवीय जीवनं तस्य समस्यास्तासां समाधानं च चित्रयति। अत कलार्थं

नैतिकाः गुणाः स्वयमेवोपस्थिताः भवन्ति। कलाकारोऽपि समाजे निवसति तेन सामाजिकसत्यस्योपेक्षा कथं कर्त्तुं शक्या। कलाकारः स्व कलामाध्यमेन जीवनप्रकृतिघटनानां नवीनं चित्रमुपस्थापयति। सीमातीताः नैतिकोपदेशाः सत्यादयोधर्माः प्राकृतिकतत्त्वानां स्वाभाविकस्वरूपं विनाशयन्ति, घटनासु स्वाभाविकत्वसंपादनाय नैतिकसत्यादयो स्वीक्रियन्ते। सुन्दरान्वितं सत्यं सहजग्राह्यं भवति।

कला स्वयंपूर्णा निरपेक्षेति सिद्धान्तः पूर्णरूपेण नोचितः यतोहि-यथार्थं संसारेण भेदवती कल्पना तु–केवलं काल्पनिकमयथार्थं जगन्निर्माणं करोति, जीवने तस्याः कश्चन सदुपयोगो न भवति। अतः स्वान्तःसुखाय व्याजेन कविः समाजस्यावहेनं कर्त्तुं न योग्यः। सत्यमेतद् यत् कविः प्रकृत्याधारेण स्वानुभूतीनां प्रकाशनं विदधाति। प्रकृतेः कुरुपतामेकरसतां नीरसतां सुरुपतया सरसविधानेन सरसतापानेन परिवर्त्यप्रस्तौति परन्तु तेन काव्यस्य प्राणाधारतत्त्वं तु जीवनक्षेत्रादेव समवाप्यते।

निष्कर्षरुपेण कथयितुं शक्यते -- उभे मते परस्परमन्योन्याश्रिते कलायां काव्ये च जीवनचित्रणं कलासौन्दर्याधानमुभयं तत्त्वमनिवार्यं परं चोभयोरतिवादः सर्वथा वर्जनीयः। अति सर्वत्र वर्जयेत्।

# आदर्शवादः

## पाश्चात्यसाहित्ये आदर्शवादस्य स्वरूपस्तस्य महत्वं च-

आंग्लभाषायाः (आइडियलिज्म) Idealism शब्दस्य पर्याय एवादर्शवादः । 'आइडिया' शब्दस्यार्थो 'विचार' इति, अत एवादर्शवादो हि विचारवादशब्देनापि विख्यातो वर्तते ।

साहित्ये प्रारम्भकालादेवादर्शाणां चित्रणं बाहुल्येन समुपलभ्यते । पुरातनं साहित्यमादर्शविचाराणां प्रतिनिधित्वं निभालयति । भारतीय साहित्यकाराणां भावनाप्यादर्शवती भवति स्म । ग्रीक विचारका आदर्शेन पूर्णतया प्रभाविता आसन् । तैः साहित्ये नैतिकविचाराणां समावेशः कृतः । नैतिकसदाचरणमेवादर्शवादस्य मूलाधारः ।

## आदर्शवादस्य स्वरूपः-

आदर्शवादस्य कलाकारः स्वप्नदृष्टा भवति । स संसारे न्यायस्य सत्यस्य च विजयमभिकांक्षति । तस्य मतमस्ति यज्जगद् दुःखालयमशाश्वतं चात्र परलोकसुखलाभाय जनैः प्रयतितव्यम् । परिणामे सत्यन्यायदयाधर्मादयो विजयमाप्नुवन्ति । आदर्शवादो मानवजीवने उदात्ततत्वानामाधानं करोति । स मानव चेतः सन्तुष्टं विधाय संयम-

त्यागात्मनियमनेन जनं समाजं चादर्शयुक्तं विदधाति। बाह्यकारणैर्जनः कदापि सुखशान्ति नाप्नोति, तदर्थं जनेन सन्तोषवत्या सत्यन्यायमार्गे प्रचलितव्यम ।

'प्रारभ्यते न खलु विघ्नभयेन नीचैः
प्रारभ्य विघ्नविहता विरमन्तिमधराः ।
विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः ,
प्रारभ्य चोत्तमजनाः न परित्यजन्ति ॥'

सिद्धान्तानुसारं प्रारम्भेऽन्यायहिंसनदुराचाराः सफलाः प्रतीयन्ते, परिणामे सत्यन्यायधर्मादय एव जयन्तेतराम् । अत एवादर्शपरायणो जनः सांसारिकसुखैरप्रभावितः सन्नाध्यात्मिकपरमानन्दाय प्रयत्नवान् भवति ।

आदर्शवाद विचारकाणां मते शरीरं क्षणभंगुरं विनाशशीलं, शाश्वतमजरममरं चात्मतत्वम् वर्तते । असौ विचारकः साहित्ये कल्पनया विचारशक्त्या च तस्यैवात्मनोऽन्वेषणेऽविहितमना भवति अत एवादर्शवादस्य साहित्यकारः स्व रचनासु, कृत्याकृत्य प्रवृत्ति-निवृत्ति पूर्वकं [“रामादिवत्प्रवर्त्तितव्यं न रावणादिवदिति' भारतीयसिद्धान्तानुसारं सदैव सत्यन्याययोर्विजयमुद्घोष्य सद्वृत्तीनां प्रतिष्ठापनं करोति ।

आदर्शवादस्य भेदौ-

डा० नगेन्द्रेण सिद्धान्तव्यहारयोर्माध्यमेनादर्शवादस्य

द्वौ भेदौ प्रतिपादितौ—

१. काल्पनिकादर्शवादः ।

२. व्यावहारिकादर्शवादः ।

कल्पनात्मकादर्शवादे साहित्यकारः काल्पनिकेनानन्देन परितृप्तो भवति, स हि कल्पनाजन्यरमणीयक्रीडासु रमते, कल्पनायामेवादर्शवादस्य चित्रं रचयति—व्यंग्योक्त्या कथितम् —'They are riding on horse back in vacam' ।

व्यावहारिकादर्शवादे काल्पनिकं जगद् विहाय संयम-विवेकमहत्वाकांक्षाविषयेषु विशेषावधानं दीयते । नैतिकाधारे-स्थिता आदर्शा व्यावहारिकसमाधाने योगदानं कुर्वन्ति । एतादृशा आदर्शा मानवोन्नतिकरणे सफला भवन्ति ।

आदर्शस्य जीवने महत्वम्-

आदर्शवादे मानवजीवनस्य शाश्वतमूल्यानां विवेचनं विलोक्यते । संसारस्य मानवजीवनस्य क्षणभंगुरतात्मनश्च सत्यत्वं शाश्वतत्वं चादर्शवादेन संप्रतिपादितम् । ईश्वरीय सत्तायाः बोधः न्यायमर्यादासत्यसंयमानां महत्वं, तदनुकूला-करणं चेति तत्वमादर्शवादेनाविष्कृतम् ।

आदर्शैरुच्चतमजीवननिर्वाहस्य प्रेरणासमुपलभ्यते । सद्विचारैर्मानवः पशुभावादूर्ध्वमुत्थाय दिव्यलोके महीयते अन्यथा—

'साहित्यसंगीतकलाविहीनः

साक्षात्पशुः पुच्छविषाणहीनः' इति सिद्धान्तेन स स पशुरेव भवति ।

आदर्शवादपरः कविः संसारस्य क्षणभंगुरतां विनाशशीलतां चाकलय्य तदस्तित्वम् स्वीकुर्वन्साहित्ये यथातथ्यचित्रणस्य बिरोधं करोति स्वकाव्ये उदात्तत्वं सन्निवेषयति ।

आदर्शवादे 'किमस्ति' इत्यस्य विवेचनं नास्ति 'किं भवितव्यम्' एतद् विषये बहुवर्णितम् । साहित्यकारः साहित्येऽनुकरणीय साम्राज्यस्य परिकल्पनं विदधाति, यत्र दृढप्रतिज्ञापरायणाः सत्यन्याय सन्तोष सौहार्दान्विता जनाः सुखेन विहरेयुः ।



## क्रोचे तस्य चाभिव्यंजनावादः

( १८६६ - १९५२ ई० )

इटलीदेशवास्तव्यः दार्शनिक शिरोमणिः 'क्रोचे' महाभागः साहित्य क्षेत्रेऽभिव्यंजनावादस्य प्रवर्तकरूपेण विख्यातो वर्तते। मूलरूपेणासौ दार्शनिक आसीत्। वस्तुतः क्रोचे महाभागः प्रसिद्धदार्शनिक हींगलस्य विचारैः प्रभावित आसीत्। हींगलेन प्रभावितोऽपि सन् कलाविषये तस्य सिद्धान्तं त्रुटिपूर्णमेवाङ्गी चकार। अनेन हि अभिव्यंजनावादस्य प्रवर्तनमपि दर्शनशास्त्राश्रितयादृशा कृतम्। यद्यपि-पाश्चात्य जगति प्लेटो कालात्पूर्वमपि दर्शनकाव्ययोर्विवाद आसीत्। नीतिवादिभिर्दार्शनिकैश्च नैरन्तर्येण समुदघोषितम् यत्काव्यमनैतिकं भवति। अत एव प्लेटोः कथयति यत् सभ्यसमाजे काव्यस्य नास्ति किमपि स्थानम्। अरस्तुः काव्ये नैतिकाचरणस्य परीक्षणं न विदधाति तन्मते काव्यं कदाप्य नैतिकं न भवति, काव्यस्य सत्यम् व्यापकम्-सत्यम् भवति।

पुनरपि नैतिकाधारेण काव्य बिश्लेषणस्य परम्परा नावरुद्धा। वैज्ञानिकप्रभावाणां साम्मुख्ये तु काव्यनिर्माणं बालक्रीडावत् लघुवृत्ति सारहीनं च कर्म स्वीकृतं जनैः। एतादृश्यामवस्थायां प्रायः सर्वैरेव कविभिः वर्ड्सवर्थशैली मैत्थ्यू प्रभृतिभिः काव्यस्य संरक्षणे वहु प्रयतितम्। क्रोचे-

महाभागेनापि स्वसिद्धान्तेनाभिव्यंजनावादेन विज्ञानदर्शनाभ्यां काव्यस्य संरक्षणं कृतम्।

क्रोचेमहाभागेन सर्वप्रथमम् आत्मन उपरि विचारं विदधता तस्य द्वे क्रिये भवत इति समुद्घोषितम—

१— सैद्धान्तिकी-क्रिया।

२—व्यावहारिकी-क्रिया।

सैद्धान्तिक क्रियया मानवः ज्ञानमुपार्जयति। व्यावहारिक क्रियया च जीवने व्यवहारज्ञानमवाप्नोति। अनयोरपि क्रिययोः पृथक् पृथग् द्वौ द्वौ प्रभेदो प्रभवतः।

सैद्धान्तिक-क्रियायाः—

१. प्रातिभक्रिया। २. बौद्धिकक्रियेति भेदद्वयम्।

व्यावहारिक क्रियायाः— १. उपयोगिन्यार्थिकक्रिया। २. नैतिकक्रिया चेतिभेदद्वयम्।

क्राचे महाभागस्य विचारे प्रातिभक्रिया पूर्णतः स्वतंत्रा भवति। बौद्धिकक्रियायां तु प्रातिभक्रियायाः सहयोगोऽनिवार्यः। प्रातिभक्रियया ज्ञानाभिव्यक्तिर्भवति। प्रातिभ ज्ञानं बिना बौद्धिक क्रियाणां कार्याणि-विचाराः— न जायन्ते। एकत्र तु बौद्धिक क्रियावलम्बनेन प्रतिभक्रियायाः प्रवृत्तिर्जायते अपरत्र तु प्रतिभक्रिया व्यावहारिक क्रियासु स्वातंत्र्येण प्रवर्तिता विलोक्यते।

सैद्धान्तिकक्रियाणामाधारेणैव व्यवहारिक्यः क्रियाः प्रवर्तिताः भवन्ति । यतोहि व्यावहारिकक्रियाणां प्रेरणार्थं मानवमनस इच्छा एव प्रेरणादायिन्यो भवन्ति। इच्छा तदैव भवति यदा वस्तुनः प्रातिभज्ञानं बौद्धिकज्ञानं वा भवेत् । सत्यपि प्रतिभज्ञाने बौद्धिकज्ञाने वा इच्छा समुद्भूतिर्नानिर्वार्या । किन्तूक्तज्ञानाभावे इच्छोत्पत्तिरसंभवा भवति । यावत्पर्यन्तं वस्तुनः प्रवृत्तेर्ज्ञानं न जायते तावत् तदिच्छा कथं संजायते ।

क्रोचे मतानुसारम्—'वस्तुप्रकृति बोधजनकं प्रातिभ-बौद्धिक ज्ञानं विना वयं वस्तुतत्वस्येच्छा जागरणे सक्षमाः कथं भवाम ? यदि वयं परितो विस्तृतं वस्तुजातं न जानीमहे तदा कथं तदिच्छास्माकं चेतसि समुद्भवेत् । कथं वा वस्तूनां स्वरूपपरिवर्तनेऽस्माकं क्रिया फलवती स्यात् ।

तथ्यमिदं यत् व्यावहारिक्यः क्रियाः सैद्धान्तिक-ज्ञानात्मकक्रियाभ्यः पृथग् भूताः सन्ति । व्यावहारिक क्रियासु-या उपयोगिन्यः आर्थिकक्रियास्ताः नैतिक क्रियापेक्षया स्वतन्त्राः सन्ति । नैतिकेच्छां विनापि उपयोगिनीनामार्थिक क्रियाणां प्रवृत्तिर्दृग्गोचरा भवति । नैतिकोक्रिया-तत्कार्यानानिवार्यरूपेणणोपयोगि - तत् आर्थिकक्रियाश्रितमेवास्ते । नैतिकाधारं विनापि मानवचरित्रे उपयोगिकार्थिकतत्वानां समावेशो भवत्येव ।

क्रोचे महाभागमते आत्मनः द्वे प्रक्रिये भवतः ।

१. विचारात्मक प्रक्रिया ।

२. व्यावहारिक प्रक्रिया ।

१. विचारात्मक प्रक्रिया–

विचारात्मक प्रक्रियायां स्वयं प्रकाशज्ञानं तर्कश्चेति भेदद्वयं भवति । स्वयं प्रकाशज्ञानस्य सम्बन्धः व्यक्तिविशेषैः पदार्थविशेषैः सह भवति । तर्कस्य सम्बन्धः जात्या सह जायते । अनेन सिद्धान्त विधायकस्य दर्शनस्य विज्ञानस्योदयो जायते ।

२. व्यावहारिकी प्रक्रियाः-

अस्याः प्रक्रियाया अपि द्वोभेदौ (क) आर्थिकम् (ख) नैतिकम् च । अत्र हि आर्थिक शब्दः पारिभाषिक रूपेणाङ्गीकृतः । योगः क्षेमार्थपरोऽयं शब्दः । नैतिक शब्दस्तु सदसदर्थ रूपेण स्वीकृतः । विचारव्यवहारयोर्मध्ये समन्वयं कुर्वन् क्रोचे महाभागः कथयति — यदार्थिक्यः क्रियाः व्यवहारस्य सौन्दर्यशास्त्रम । नैतिक्यः क्रियाश्च व्यवहारस्य तर्कशास्त्रम् ,

लौकिकं प्रज्ञात्मकं वा ज्ञानम् प्रतिभज्ञानाश्रम् । नैतिकं च कर्मार्थिक कार्याश्रिम । एवं प्रतिभक्रिया पूर्णस्वतन्त्रा । नैतिकी च क्रिया प्रतिभबौद्धिकार्थिकक्रियात्रय परतन्त्रा ।

काव्यस्य कलानां सम्बन्धो प्रतिभक्रियायाः परमोपयो-

गिता वर्तते। क्रोचे महाभागः कथं प्रतिभक्रियामाध्यमेन काव्यस्याभिव्यंजनावाद सिद्धान्तं प्रतिपादयति तद्धि दर्शनीयम् —ज्ञानस्य-प्रकारद्वयं वर्तते । १. प्रातिभम् ज्ञानम् । २. प्रज्ञात्मकम् ज्ञानम् । कल्पनया प्रातिभं ज्ञानं जायते। प्रज्ञया च प्रज्ञात्मकं ज्ञानं भवति प्रातिभं ज्ञानं व्यष्टिज्ञाम्। प्रज्ञात्मकं ज्ञानं तु सामान्य ज्ञानम्। प्रातिभज्ञानेन वस्तूनां बिम्बोदयो भावोदयश्च जायते। प्रज्ञात्मकेन ज्ञानेन वस्तुविषये सामान्य ज्ञानं जायते । प्रातिभं–स्वयं प्रकाशज्ञानं दार्शनिकबौद्धिक-ज्ञानाद् विभिन्नम्। प्रातिभं ज्ञानं तु अलौकिकं यत् प्राकृतिक दृश्यमङ्गीकृत्य साकाररूपेण सुन्दरतया तं दृश्यमभि व्यंजयति सेयमभिव्यक्तिरन्तरक्रिया वर्तते।

"The Spirit does not obtain intuitions Otherwise than by making forming expressions."

काव्यस्याभिव्यंजना–

क्रोचे महाभागस्यमते प्रातिभं ज्ञानमभिव्यंजना–चैक काले जायते। द्वयोरेवैक्यं भवति। एवं हि स प्रातिभज्ञान-काव्यव्यंजनामध्ये भेदं न स्वीकरोति। अभिव्यंजनम् नाम नास्ति मनसः प्रगल्भता तत्तु आत्मनः परमावश्यकं तत्वम् अभिव्यंजनेन वस्तुतत्वं सत्स्वरूपं धारयत् सचेतसां चेतसि प्रकाशते। कविः स्वान्तर्गतप्रेरणया वस्तुतत्वं स्वरूपाधायकं

कुर्वन् यया कल्पनया काव्यसृजने संलग्नो भवति तद् हि तस्याभिव्यंजनम् ।

क्रोचे महाभागस्यावधारणाः निम्नाङ्कितरूपेण कथयितुं शक्यन्ते—

१. सहजानुभूतिरभिव्यञ्जना कलेति पर्यायवाचिनः शब्दाः ।

२. कलायां शैलिविषययोमध्येऽभिन्नता ।

३. कलायास्तात्विकं विवेचनमाङ्गिकं च विश्लेषणं तद् हननमेव ।

४. कलासृजनं तदास्वादनं चैकं तत्वम् ।

५. सामान्यानुभूतौ कलाजन्यानुभूतौ च नास्तिभेदः तत्र मात्रा मात्र भेदः ।

सामान्यरूपेण क्रोचे महाभागस्य कलासम्बन्धिनो विचाराः षट्षु प्रभेदेषु विभाजयितुं शक्याः—

१. सहजानुभूतिः

चित्रशब्दसँगीत माध्यमेनान्येनापि केनापि प्रकारेण जनस्य सहजानुभूतिः—अभिव्यँजनायाः कमप्येकमाधारमङ्गीकरोति । वस्तुतः अभिव्यँजना हि सहजानुभूतेरभिन्नाङ्गतया प्रवर्तते । सहजानुभूतिः पदार्थबोधाद् विभिन्ना स्थितिः । पदार्थबोधाय पदार्थस्य स्थितिरनिवार्या भवति । किन्तु सहजानुभूतिस्तु पदार्थाभावेऽपि सँजायते। सहजानुभूतिः

प्राकृतानुभूतिभ्यो विभिन्ना भवति। एतादृशीयं सहजानुभूतिरभिव्यँजना जायते।

२. कला–

क्रोचे मतानुसारम्-मूलतः कलाध्यात्मिकी क्रिया वर्तते। कलाकृतिस्तु तस्य भौतिकः स्वरूपः नानिवार्यरूपेण तस्यास्तित्वम्।

कलायाः वैशिष्टयम्-

(क) कला न भावरूपा, सा हि ज्ञानरूपा यतोहि सहजानुभूतिः—ज्ञानरूपा भवति।

(ख) कलाखण्डा भवति।

(ग) कलायाः वर्गीकरणमपि नोचितम्। क्रोचे महाभागः कथयति यद् तेषां पुस्तकानां ज्वालनमेवोचितं येषु कलावर्गीकरणं कृतम्।

(घ) कलायां कलाकृतौ चान्तरं वर्तते। कलान्तरिकी क्रिया भवति। स्वयंप्रकाशज्ञानमप्याध्यात्मिकम्, सहजाताभिव्यक्तिरपि आन्तरिकीक्रिया। कलाकृतयस्तु चित्रकाव्यवास्तुरूपेण स्वयंप्रकाशजन्याभिव्यक्तिनां प्रकाशने साधनानि।

३. वस्तुतत्त्वम् विषयो वा–

अभिव्यंजनावादे आकारस्य प्राधान्यं वर्तते। पुनरपि–

अभिव्यंजनायां यन्नानात्वं विलोक्यते तत्स्थूल द्रव्याकारादेव। यतोहि तत्परिवर्तनशीलम्।

४. शैली–

आचार्य रामचन्द्र शुक्लस्य मते 'अभिव्यंजनावादः' अनुभूति प्रभावयोर्विचारं परित्यज्य केवलं वाग्वैचित्र्यमाश्रित्य प्रवर्तते। वाग्वैचित्र्यस्य हृदयगम्भीरवृत्तिभिः सह नास्ति कोऽपि सम्बन्धः। तत्तु केवलं कौतूहलं जनयति। क्रोचे मतानुसारम्–

"He who has nothing definite to express may try to hid his internal emptiness with a flood of words although at bottom they convey nothing."

५. सौन्दर्यम्–

क्रोचे महोदयेन सौन्दर्यबोधाय कल्पनायाः प्राधान्यमङ्गीकृतम्। तेन विषयगत सौन्दर्यस्योपेक्षापि न कृता। स कथयति यत् प्राकृतिकं सौन्दर्यं कलायाः सौन्दर्यात्मक पुनर्निर्माणस्य च समुत्तेजकं तत्वं वर्तते।

"Natural beauty is simply a stimulus to aesthetic reproduction, which presupposses previous Production without preceding aesthetic intuitions of the imagination nature can not arouse any at all."

आचार्य रामचन्द्र शुक्लेन कथितम्-यत् क्रोचेमहाभागस्तु कल्पनांसाहाय्यं विना प्राकृते जगति कुत्रापि किमपि सौन्दर्यं नाङ्गीकरोति । यत् किंचित् सौन्दर्यं तत् केवलमभिव्यंजनायाः युक्ति स्वरूपे एव। एवं सौन्दर्यमभिव्यंजनाया एवापरः पर्यायः वर्तते ।

६. अलंकारः–

अलँकारो हि-अभिव्यँजनायाः सहजधर्मः, अभिव्यंजनायामलङ्काराः न समारोपितव्याः नापि पृथक् करणीयाः। क्रोचेः अलँकाराणां महत्वमभिव्यक्तेः सहजधर्मरूपेण स्वीकरोति । अतएवासौऽलँकारालंकार्ययोर्भेदं न स्वीकरोति। तन्मते सहजानुभूतिः कलासौन्दर्यं च नास्ति पृथक् तत्वम् सर्वमेतद् अभिव्यँजनस्य नामान्तरम् वर्तते ।

समीक्षा–

क्रोचे स्वयुगस्य महान् दार्शनिक आसीत्। अनेकैर्दार्शनिकैः समीक्षकैश्च तस्य सिद्धान्तानां स्वागतं कृतम् । कतिपयैः समीक्षकैस्तस्वमतस्य समालोचनमपि विहितम्। सुप्रसिद्धोऽ अमेरिका वास्तव्यां जे० ई० स्पिन पार्थः प्रारम्भे तु क्रोचे महाभागस्य समर्थक आसीत् परन्तु स 'अभिव्यँजनैव कला, सर्वाभिव्यँजना कला भवतीति' क्रौचे मतस्य निराकरणम करोत् । स्काटजेम्स महाभागेनापि क्रोचे सिद्धान्तानां समाक्षणं सम्हादितम् । तेन स्पष्टतया कथितम्-यत् 'कलाकारस्य कार्यं

भावसम्प्रेषणं भवति; एतद्विषये क्रोचे महाभागः न किमपि कथितवान्।

'कलाकारस्य कृते विषयनिर्धारणमपि नावश्यकम्। निकृष्टमुत्कृष्टं वा विषयमवलम्ब्य कविः काव्यकरणे क्षमः' क्रोचे महाभागस्य मतमिदं नोचितम्। एतन्मतानुसारं काव्य कलाक्षेत्रे निरर्थकाः समारोपाः समापतिताः। विकृतं, विक्षिप्तं, क्रूरतापूर्णमपि सहजज्ञानमनुभूत्यात्मकत्वेन कलात्मिकाया अभिव्यंजनायाः क्षेत्रे समापतत् काव्यविषयं जगुप्सितं विदधाति। सम्प्रेषणतत्वेन कला सफला भवति परन्तु क्रोचे महाभाग एतद्विषये किमपि नोक्तवान्। 'क्रोचे' सिद्धान्ते मानव जीवनोपरि सम्यक् रूपेण विश्लेषणं नावलोक्यते।

ॐ

# सिगमंडफ्रायड:

## काव्ये तन्निर्माणे च सिगमंड फ्रायडस्य विचारा:-

सिगमंड फ्रायडेन मानवमनस: कुण्ठाभि: सह काव्यस्य सम्बन्धो भवतीति प्रतिपादितम् । मानवमनस: दमिता: वासना: साहित्यमाध्यमेन परिष्कृता: भूता अभिव्यजिता: भवन्ति । अत: काव्यस्य मनोविज्ञानेन सह गहनतम: सम्बन्धो भवति । मानवमनस: दमिता इच्छा: कुण्ठा: विश्रृंखलिता: न्थयश्च साहित्यमाध्यमेन परिष्कृता: भूता: विवेचनपद्धत्या मास्वादनपदं लभन्ते ।

## ानवकुण्ठानामभिव्यक्तिर्हि काव्यम्-

फ्रायडस्य निश्चितेयं विचारधारा यत् साहित्यम्-ानवमनस: कुष्ठानामभिव्यक्ते: सशक्तं माध्यमं वर्तते । ानवमनस: या इच्छा वास्तविकरूपेणाभिव्यक्ता न भवन्ति ा एव यथावसरं साहित्यरूपेण प्रस्फुटिता: भवन्ति । आसाम-भिव्यंजनेन मानव: आन्तरिकरूपेण परमानन्दमवाप्य परां ान्तिमवाप्नोति । एतदेव काव्यस्यास्वाद्यत्वम् काव्यस्य जने कवि: तदध्ययने तच्छ्रवणे च पाठक: यमानन्दं लभते तत् मितेच्छानामभिव्यक्तिकारणादेव जायते ।

फ्रायडमते—कामवासनेव काव्यस्य मूलाधारतत्वम् । अनया भावनया सहृदयसाहित्ययोर्मध्ये तादात्म्यं भवति । कामभावना सर्वेषां चेतसि येन केनापि रूपेण विद्यमाना सती पूर्णरूपेण प्रकाशिता न भवति । कविः कल्पनामाध्यमेन तां परिष्कृत्याभिव्यंजयति तदैवानन्दोपलब्धिर्जायते । अतः काव्यसृजने कामभावनैव मुख्यं कारणम् ।

मूलरूपेणावस्थितः कामः लोकलज्जया घृणयोपहासेन च दमितः सन् चेतसि कुण्ठां जनयति । कुण्ठा एवातृप्ताः वासनाः भवन्ति । आसामभिव्यक्तिरेव साहित्यसृजनस्य मूलं कारणम् । साहित्येन मूलकामवासनानां यौनेच्छानाँ च सहजाभिव्यक्तिर्जायये ।

कुण्ठाभेदाः-

फ्रायडः कुण्ठानां दमितेच्छानां च प्रकारद्वयं प्रतिपादयति ।

१. महत्वाकांक्षिण्यः कुण्ठाः ।

२. अतृप्तकामवासना जन्याः कुण्ठाः ।

सर्वेषां चेतसि आसां कुण्ठानामेकरूपता न भवति । जनस्यावस्थारुचिपरिस्थिति कल्पनाशक्त्याधारेण आसां स्वरूपभेदो जायते ।

फ्रायडः—कल्पनाधारेणैव काव्ये भावतीव्रत्वं स्वीकरोति । कवेः यादृशीकल्पनाशक्तिर्भवति तत्स्यकाव्येऽनुभूति

पक्षमपि तादृशं तीव्रं भवति । एवं काव्यम् हि कवेर्वैयक्तिक भावनानां निदर्शनम् ।

फ्रायड महाभागेन साहित्यसृजने कामस्य कल्पनायाश्च तत्वं मूलरूपेणाङ्गीकृतम् । कामकल्पनयोः समन्वितः स्वरूपः काव्य निर्माणे हेतुः । तस्य कल्पनापि नास्ति केवलाबौद्धिकी क्रिया । कल्पनायां हृदयपक्षस्य सहयोगः दिवास्वप्नानां (Day Dreams) च समावेशः परमावश्यकः ।

फ्रायड महाभागेन मानवस्य दिवास्वप्नैः सह साहित्य-सम्बन्धो भवतीति प्रतिपादितम् । तेन साहित्यसृजनस्य मनोवैज्ञानिकी प्रक्रियापि वर्णिता । कवेः कौशलं वैशिष्ट्यं चैतत् यत्स स्वकाव्ये स्वकीयां चेतनां कुण्ठां च तादृकरूपेणाभिव्यंजयेत् येन सर्वः सहृदयो जनः परमानन्दमवाप्नुयात् । साधारणीकृता सा कुण्ठा सार्वजनीया, सार्वदेशीया, सार्वकालीना सती व्यक्तिविशेषसम्बन्धमात्रं न धारयति । कविः काव्येन कुण्ठं परिकृत्य सर्वजनहितायतां प्रस्तौति एतादृशमेव काव्यं परमाह्लादजनकम् ।



# मार्क्सः

## साहित्यक्षेत्रे मार्क्सवादसिद्धान्तानां प्रभावः-

वर्तमान साहित्ये समालोचनायां च मार्क्सवादविचाराणां बाहुल्येन प्रभावो वर्तते। कालमार्क्सानन्तरं प्रायः सर्वैरेव साहित्यकारैः समाक्षकैश्च साहित्ये मार्क्सविचाराः समुपस्थापिताः। भौतिक दृष्ट्या साहित्यस्य विवेचनं कुर्वद्भिस्तै याथार्थ्यरूपेण मानवजीवनस्य समस्यानां विवेचनं कृतम्। कालमार्क्सस्य विचाराः व्यावहारिकाः मौलिकाश्चासन्।

मार्क्सेन अर्थाधारे जीवनस्य विवेचनं विहितम्। अस्मिन्नर्थपरायणे जगति तस्यार्थदर्शनस्य सर्वेषु क्षेत्रेषु महान् प्रभावो दरीदृश्यते। अत एव साहित्यक्षेत्रमपि मार्क्सदर्शनेन प्रभावान्वितं जातम्।

मार्क्सवादस्य दर्शनं समाजवादाश्रितम् (Socialism) वर्तते। अस्य मूलाधारो हि वर्गसंघर्षः। मार्क्सः आदर्शवृत्तीनां विरोधरूपेण विख्यातः। अनेन हि द्वन्द्वात्मक भौतिकवादस्य (Dialectical materialism) वैज्ञानिकी पद्धतिः प्रतिपादिता। अन्यतत्वापेक्षयासौ कलायाः सामाजिकं तत्वं बहु मनुते।

साहित्यस्य स्वरूपः-

कालमार्क्समते साहित्यसमाजयोः घनिष्ठः सम्बन्धो वर्तते । सामाजिक व्यवस्थायाः मूलमर्थः । अत एव साहित्यस्य मूलमर्थ एव । तन्मते साहित्येऽपि वर्गवादस्य द्वन्द्वात्मक भौतिकवादस्य च प्राधान्यं वर्तते ।

वस्तुतः सामाजिक दृष्टिकोणेनासौ लोकमंगलस्यो पयोगाय स्वसिद्धान्तं विवेचयति । द्वन्द्वात्मक भौतिकवाद एव तस्य सिद्धान्तानामाधारशिला वर्तते । अनेनानन्दवादस्य विरोधं कुर्वता भौतिकवादस्य मार्गः समुद्घाटितः । मार्क्स महाभागस्य स्पष्टरूपेणायं समुद्घोषः—संसारस्य सर्वाणि कार्याण्यर्थाश्रितानि येनोपायेन येनानुपातेन धनोपलब्धिर्जायते तेनोपायेन तेनानुपातेन चानन्दावाप्तिः समुपलभ्यते । एवं हि तस्योपयोगितावाददृष्टिकोणेन प्रभावित काव्यं लोकमंगल-भावेनान्वितं संजातम् ।

काव्ये द्वन्द्वात्मकभौतिकवादस्य समुन्मेषः-

मार्क्सानुवर्तिनः समालोचका अपिवर्गसंघर्षेण द्वन्द्वात्मक भौतिकवादेन च पूर्णप्रभाविताः संजाताः । तदायमेव साहित्याधारः संजातः । प्रगतिवाद रूपेण भारतीयसाहित्येऽपि समवलोक्यतेऽसौ । मार्क्समतानुयायिनः कलाकाराः युगसंघर्षे संलग्नाः सन्तः भाग्यविरोधे स्व कृतिनिर्माणं कृतवन्तः सामा-

जिकव्यवस्थाया: परिवर्तनमेव तेषां लक्ष्यमासीत् । मार्क्स मते साम्येत सन्तुलनेन च वैषम्यस्य नाश: भवितुं शक्यते तदैव समाजे सुखशान्तिव्यवस्थासम्भाव्या । यावत्कलं समाजे शोषकशोषितयो: स्थितिर्वर्तते तावत्समाजे शान्ति संस्थापनं खपुष्पायितम् । समाजे पूर्णरूपेण वर्गभेदं विभिन्न धनिनिर्धनिमध्ये भेद: सर्वथा समापनीय: । अस्यमतस्य समर्थनं-कुर्वद्भि: परवर्ति-साहित्यकारै: स्व: रचनासु साम्यस्य वर्ग भेदस्यार्थतत्वस्य च चित्रणं कृतम् ।

## साहित्ये मार्क्सवादिदृष्टिकोणम्-

कास्टांकल कांडवेल: सर्वप्रथमं मार्क्ससम्बन्धिनीमिमां विचारधारां सुव्यवस्थितरूपेणोपस्थापयामास । साहित्य-समाजयो: घनिष्ठ: सम्बन्ध: अर्थाश्रित एव । साहित्यं सामाजिक जीवनेनानुप्राणितं वर्तते । सामाजिक जीवनमपि धनाधारेण स्थितम् । अतो हि मानवस्य सम्पूर्णजीवन व्यवस्थायां साहित्यधारणायां च धनस्य महत्वपूर्णं स्थानं विद्यते । मानवस्य प्रगति विषये कला साहित्यं चोभे सहयोगं कुरुत: । अने नैव कारणेन अनयोर्महत्वं वर्तत । स्वत: साहित्यस्य नास्ति किमपि प्रयोजनम । आर्थिक समस्यानां समाधानार्थं समाजे साहित्यस्योपयोगो विधीयते ।

मार्क्समहाभागेन साम्यवादस्याधारेण साहित्यस्य विवेचनं कृतम् । स कथयति यदादिमकाले साहित्ये साम्यस्य स्थानं

महत्वपूर्णमासीत् किन्तु यदा समाज-व्यवस्था विकृता संजाता तदा कला साहित्यं चोभे शासकवर्गस्य सेवायां संलग्ने संजाते। तदनन्तरं धनाधीशानां संकेतेन नृत्यन्त्यः कलाकाराः जन-साधारणक्षेत्रात्सुदूरं कला साहित्यक्षेत्रमकल्पयन्। तदैव समाजे द्वौ भेदौ सॅजातौ—१. शोषकः २. अपरश्च घोषितः।

कालमार्क्स मते यत्साहित्यं लोकमंगलाय स्वतन्त्रतायै चासीत् तदेव शोषकवर्गस्यास्त्र रूपेण परवर्तितं सत् दुरुपयोगाय परिणतम्। यतो हि शासकाः धनिनश्च स्वधनेन निर्धन साहित्यकारान् कवीन् कलाकरांश्च क्रीत्वा - स्वेच्छानुसारं साहित्यसृजनविडम्बनं कारयन्ति। एतादृशेषु काव्येषु धनिनां प्रशंसनं तेषां मतस्य समथनमेवावलोक्यते। एतस्मादेव कारणात् समाजे-पाप पुण्य भावानां प्रचलनं संजातम्। शोषक मुखापेक्षिकाव्यम् तु शोषितेभ्यः भाग्यधर्मसन्तोषादिसदुपदेश-दानायैव कृत-कृत्यं भवति।

## विवेचनम्-

किं मार्क्ससिद्धान्तेन साहित्यतत्वस्य यथार्थं समग्रं च विवेचन भवति? किं सर्वाङ्गीणोऽयं सिद्धान्तः? वस्तुत मार्क्सस्य साम्यदर्शनं व्यावहारिकं वर्तते यतोहि तन सर्वं कार्यं जातं धनाश्रितया दृष्ट्या विलोकितम्। यद्यपि किंचित्रूपेण सत्यमेतत् यत् साहित्यकारोऽपि स्वकाव्यस्य फलमर्थीरूपेणा-भिवांच्छति परन्तु एतत्तु नोचितम् यत्स पूर्णरूपेण शासकानां धनिनां च दास एव संजातः। साहित्यस्येदं संकुचितं दृष्टि-

कोणम् यतोहि—काव्यस्य—सर्वोत्कृष्टं लक्ष्यं तु परमानन्दावाप्तिरेव वर्तते । भारतीयेऽपि काव्यशास्त्रे मम्मटेनापि—षट् प्रयोजनेषु मध्ये 'अर्थकृते' इत्युक्त्वा परनिर्वृत्ति प्रयोजनं काव्यस्य परं प्रयोजनमङ्गीकृतम्–यथा—

काव्यं यशसेऽर्थकृते व्यवहारविदे ।
सद्यः परनिर्वृतये कान्तासम्मितयोपदेशयुजे ॥

जीवनेन सम्बद्धोऽर्थोऽपि साहित्यक्षेत्रे सभापतति किन्तु मार्क्स महाभागस्य मतमिदं सँकीर्णं वर्तते तेन तु केवलं वस्तुपरायणया दृशा साहित्यमवलोकितम् ।



# पाश्चात्य काव्याचार्याणां मते काव्यस्य लक्षणम्

पाश्चात्यैः काव्यसमीक्षकैः कल्पनाशक्तिमात्राधारेण काव्यस्य विश्लेषणं कृतम्। भारतीय काव्य परम्परायां यथा रसालंकारध्वनि रीतिगुणौचित्याधारेण काव्यात्मतत्वविवेचनं काव्यस्य विभिन्नाः सम्प्रदायाश्च दृष्टिपथमायान्ति तथा नास्ति पाश्चात्य समीक्षायां तस्य काऽप्यवसरः।

अरस्तूः काव्येऽनुकृतिसिद्धान्तं सम्प्रतिपादयन् निगदति यत् 'शब्दमाध्यमेनाभिव्यक्तानुकृतिः छन्दसः साहय्येन संगीतात्मिकासती काव्यं संजनयति'। अरस्तू मते काव्यस्य मुख्यतत्वम्—

१. वास्तविकं जगत्।
२. अनुकरणम्।
३. अनुकृतौ शब्दसंगीतानां समन्वयः।
४. विरेचनम्।
५. काव्यसत्यम्।

विलियम शेक्सपियरः काव्ये कल्पनातत्वस्य प्राधान्य-मङ्गीकरोति, यथा तस्य मतम्—'कवेः कल्पना तु अज्ञात वस्तूनां स्वरूपाधायिका भवति। तस्य लेखन्या अगण्याः

आस्तित्वशून्या अपि पदार्थाः साकार रूपेणपरिणमिता जायन्ते । भावनावेग एव काव्यकारणम् ।

विलियम वर्ड्सवर्थ मते—शान्ति काले स्मृतानां प्रबलावेगानां स्वच्छन्द प्रवाह एव काव्यपदेनोच्यते । यथा—

Poetry is Spontaneons overflow of Powerful feelings. It takes its origin from emotion recollected intranquility.

जान मिल्टनः—कथयति यत काव्यं सरलं प्रत्यक्षमूलकं रागात्मकं च भवति—

Poetry Should be Simplc seasons and possionate.

कालरिजमते काव्येऽभिव्यक्तेः प्राधान्यम् । उत्तमोत्तम शब्दानामुत्तमोत्तमक्रम विधानमेव काव्यम्—

Poetry is the best words in the best order.

डा० जॉनसनविचारे काव्यं छन्दोवद्धं भवति—

Poetry is meterical composition.

काव्यस्य विभिन्नतत्त्वानां समन्वयं विदधता तेनोक्तं यत् काव्ये सत्यस्यानन्दस्योद्‌गमस्तत्र बुद्धिसाहय्येन कल्पना-प्रयोगो विधीयते—

Poetry is the art of uniting pleasure with truth by calling Imagination to the help of reason.

जेम्स हेनरीले हण्टस्तु—संस्कारभूमौ समागतां दूषितां प्रवृत्ति बलवतीं भावनां वा पैंशन Passion शब्देन परिभाषयन् एतादृशीं भावनामेव काव्यलक्षणत्वेनाङ्गी करोति ।

हण्टमहोदयेन काव्यस्य समेषां बाह्यतत्त्वानां समावेशः काव्यपरिभाषाविषये कृतः, परन्तु काव्यप्रतिभाविषये तेन न किमपि निगदितम् ।

कारलायनः कथयति यत्-संगीतमयविचारगुम्फनमेव काव्यम—

A musical thought is one Spoken by a mind that had penetrated in to the inm0st heart of the thing detec the inmost mystery of it.

सुप्रसिद्धेनसमालोचकेन कविना मैत्थ्यू आर्नल्डि-महाभागेन कथितं यत् काव्यस्यमूलमाधारो जीवनस्य समालोचनम्—

Poetry is at bottom a criticism of life.

हडसन महाभागेन काव्यलक्षणे सर्वसिद्धान्तानां

समन्वयः समुपस्थापितः, यतो हि काव्ये कल्पनया मनोवेगेन च जीवनस्य व्याख्या विधीयते।

Poetry is interpretation of life through imagination and emotion.

पी. बी. शैलोमहोदयस्य लक्षणं भारतीय काव्यपरम्परानुगतं विलोक्यते, यथा-काव्यं सदैवानन्दमयम्—अस्य प्रभावो, ऽलौकिकोऽकाल्पनिको लोकोत्तरश्च भवति, कविः सीमातीतोऽसीमे शाश्वतो जगति रमते। तस्य भावनायां सभय स्यस्थानस्य नानात्वस्य चावकाशो न जायते।

काव्यस्य परिभाषेयं भारतीयरसतत्त्वेन सह साम्यं बिभर्ति, यतोहि काव्यानन्दः—ब्रह्मानन्दसहोदर इति स्वीकृतो भारतीयरसज्ञैः।

समेषामालोचकानां मतविश्लेषणेन काव्ये निम्नाङ्किता विषयाः समपेक्षिता भवन्तीति कथयितुं शक्यते—

१. काव्यस्य भाषा कलापूर्णा भवेत्।

२. काव्यविषया जगता जीवनेन च सम्बद्धः स्यात्।

३. विषयस्य सत्यता समपेक्षिता भवति।

४. काव्येन परमानन्दावाप्तिर्भवेत्।

५. आनन्देन सह शिक्षालाभोऽपि स्यात्।

६. विषय निरुपणे कल्पनौचित्यम् ।

७. कविः सरलतया काव्यमभिव्यजयेत् ।

एवं काव्यं हि अनुभूतीनां प्रकाशनम्; सत्यस्यान्वेषणम्, कल्पनायाः निकेतनम् भवति, यस्य प्राङ्गणे मानवो द्वन्द्व संघर्षकुटिलाचारेण श्रान्तः सन् परमानन्देनाप्लावितो भुत्वात्मानमपि विस्मरति ।



# पाश्चात्य काव्य शास्त्रस्य त्रासदी Tragedy सिद्धान्तः

त्रासदीसिद्धान्तः पाश्चात्यकाव्यशास्त्रस्य महत्वपूर्णो-पलब्धि र्वर्तते । अस्य प्रवर्तको यूनानी समालोचकप्रवरः अरस्तू वर्तते । त्रासदीस्वरूपं वर्णयन्नसौ कथयति यत्—

गम्भीरस्य स्वतः पूर्णस्य निश्चितायामवतः कार्यस्यानु-कृतिरेव त्रासदी । यन्नाटकस्य विभिन्नरूपेषु सालंकृतया-भाषया कार्यव्यापार रूपेण प्रकटितं भवति । अस्मिन्काव्ये करुणत्रासयोरुद्रेकेण मनोविकाराणां समुचितं विरेचनम् जायते ।

कार्यस्यानुकृतिरूपत्रासदी काव्यं-तस्य च निम्नाङ्कितानि तत्वानि—

१. गाम्भीर्यम् ।
२. स्वतः पूर्णता ।
३. निश्चितायामः ।
४. कार्यस्य प्रदर्शनम्, न तु वर्णनम् ।
५. सालंकृता भाषा ।
६. त्रासकरुणोद्भाविन्यः घटनाः ।
७. उद्देश्यरूपे भावपरिष्कारः ।

उपर्युक्त लक्षणैः करुणत्रासयोर्विरेचनाधारेण परिष्कृता रचना त्रासदीपदं लभते ।

त्रासदीकाव्यस्याङ्गानि—

१. कथानकम्, २. चरित्रचित्रणम्, ३. पदरचना भाषा वा ४. विचारतत्वम्, ५. दृश्यविधानम्, ६. संगीतम् ।

१. कथानम् (Plot)

अरस्तूः त्रासदी काव्यस्यात्मतत्वं कथानकमनुमोदयति । त्रासदी काव्यम् जीवनस्यानुकृतिर्वर्तते । अनुकृते व्यापारे कार्यव्यापारस्य प्रमुखता भवति । सुखदुःखाभ्याम् काव्यगतप्रभावो जायते । तदेतत्कार्ये सन्निहितम् । त्रासदी काव्यस्य साध्यं कार्यम्, घटना वा वर्तते । त्रासदीकाव्ये चरित्रस्य प्राधान्यं नास्ति । चरित्रं तु घटनायां सहायकं तत्वम् । त्रासदी काव्यम् चरित्रं विनापि सम्भवति, किन्तु कार्यव्यापारेण तन्न शक्यम् । काव्ये कारुण्यं यथा कथानकेन भवति तथा चरित्रेण, भाषणेन, विचारेण वा न सम्भवति । त्रासदो काव्यस्य कथानके मुख्यं तत्वम् द्वयं वर्तते ।

(अ) विपर्ययः—Peripetia

(आ) अभिज्ञानम्—Anagnorisis

अरस्तूः कथानस्य भेदत्रयम् प्रतिपादयति ।

A, दन्तकथा–कथानकस्याधारभूता दन्तकथाः । आसु सत्य-कल्पनयोः समन्वयो भवति ।

B. कल्पना–कविः कल्पनाधारेण घटनायोजनां विदधाति ।

C. इतिहास– त्रासदीकाव्यस्य कथानकमैतिहासिकमपि भवति किन्तु तत्र काव्यत्वं भवेत् ।

## कथानकस्य गुणाः-

### (क) एकान्वितिः- (*Unity*)

अरस्तूः मते 'कथानकस्य कार्यव्यापारे विभिन्नाङ्गानि-परस्परं सुभम्बद्धानि मुख्यकार्यव्यापारेणान्वितानि-भवन्ति'। आधिकारिकेण कथानकेन सुसम्बद्धाः घटना फलवत्यो भवन्ति ।

### (ख) पूर्णता।-

त्रासदी तादृशस्य कार्यस्यानुकृतिर्भवति यत् परिपूर्ण भवेत, जिज्ञासायाः परितोषः पूर्णता तत्वस्य मूलमस्ति ।

### (ग) सहजो विकासः-

कथानकस्य विकासः सहज रूपेण भवेत् । कथा-

नकादेव सम्वृतिविवृतिस्थितिविपर्याभिज्ञानादोनामुद्भूतिर्भवेत् । समन्विताः घटनाः श्रोतुः दर्शकस्य वा चेतसि सुखेन प्रविशन्ति ।

(घ) कौतूहलम् -

कथानके मानवस्य कुतूहलवृत्तेरुदवोधक्षमत्वमावश्यकम ।

(ङ) साधारणीकरणम् -

प्रबन्धस्य मूलाधारः साधारणीकरणम् । सर्वजनसंवेद्येन कथानकेन तादात्म्यापतिर्जायते तदा प्रेंक्षकस्य श्रोतुर्वा मनो रमते ।

कथानकस्यभेदौ -

सरलम् जटिलम् च ।

२. चरित्रचित्रणम् (*Character*)

त्रासदीकाव्यस्य द्वितीयं महत्पूर्णं तत्वं चरित्रचित्रणं वर्तते । तस्य चत्वारो गुणाः- १. भद्रत्वम् ; २. औचित्यम् ३. जीवनानुरूपत्वम्, ४. चरित्रचित्रणैक्यम् ।

चरित्रचित्रणे यथार्थादर्शयोः- समन्वयोऽप्यावश्यकः ।

सामान्यरूपेण चरित्राङ्कनं यथार्थमपि कलाकारस्य कल्पनया भावनया वा सुन्दरमाकर्षकम् च भवितव्यम् ।

## ३. विचारतत्वम् (*Thought*)

प्रस्तुतपरिस्थितौ सम्भवस्य सुसंगतस्य प्रतिपादनमेव विचारः। अरस्तूः–विचारतत्वे बुद्धिभावयोरुभयोः समावेशं करोति । डा. नगेन्द्रेण कथितम् यत् करुणत्रासक्रोधानां समावेशः बुद्धितत्वे न भवितुमर्हति । डा. नगेन्द्रें–अरस्तो-विचारतत्वस्व भागद्वयम् कृतम्–

१. यत्र कविः स्वकीयपात्रमाध्यमेन विचारप्रतिपादनं करोति ।

२. यत्रात्मगतविचाराणां प्रतिपादनं कथया चरित्रेण, भावाभिव्यक्त्या दृश्ययोजनया च भवति ।

## ४. गीतम् (*Melody*)

त्रासदीकाव्यस्यगतिराभरणरूपा भवति अस्य प्रयोगो वृन्दगानै भवति, त्रासदीकाव्यस्याभिन्नमङ्गमेतत् ।

## ५. दृश्यविधानम् (*Spectacle*)

रंगमंचस्योपकरणम्, बाह्यप्रसाधनमैन्द्रियसमाकर्षणमेतत् । रंगशिल्पस्य कार्यमेतत्'

त्रासदीकाव्यभेदाः-

अरस्तू महाभागेन त्रासदीकाव्यस्य चत्वारो भेदाः निर्दशिताः--

(१) जटिलत्रासदी काव्यम्--पूर्णतः स्थितिविपर्ययेऽभिज्ञाने चाधृतम् ।

(२) करुणत्रासदी काव्यम्--आवेगः प्रबलो हेतुः ।

(३) नैतिकत्रासदी काव्यम्--नैतिकाधारे स्थितम् ।

(४) सरलत्रासदी काव्यम्---सहजमेकान्वितया सुसंगठितम् शृंखलाबद्धम् च ।

त्रासदी काव्ये कथानकस्य महत्वम्--

अरस्तूः त्रासदी काव्यस्य षट्षुप्रभेदेषु कथानकस्य सर्वाधिक्यं महत्वमुपपादयति । डॉं नगेन्द्रेणास्य महत्वस्य विषये निगदितम् ।

(१) कार्यस्य जीवनस्यानुकृतिः त्रासदीकाव्यम् ।

(२) कार्यमेव जीवनम्---अतो हि जीवनस्यानुकृतौकार्य-व्यापारस्य प्रामुख्यं भवत्येव ।

(३) सुखदुःखे कार्याश्रिते । अतः कार्याणिघटनाः वा त्रासदी काव्यस्य लक्ष्यम् ।

(४) कार्यव्यापारेण कथानकेन सह चरित्रचित्रणं गौणरूपेण स्वयमेवोपजायते ।

(५) कार्यव्यापारेण विना त्रासदीकाव्यं न जायते चरित्र चित्रणेन विना सम्भाव्यते ।

(६) चारित्र्यव्यंजकभाषणानि, विचाराः वाक्यानि परिष्कृतान्यपि तादृशं कारूणिकं प्रभावं न जनयन्ति यादृशं कथानकस्य कलात्मकेन संयोजनेन जायते ।

(७) त्रासदीकाव्ये सर्वाधिकं महत्वपूर्णं रागात्मकं तत्वम् । स्थिति विपर्ययाभिज्ञानं च कथानकस्याङ्गे द्वे ।

नवोदितैः कलाकारैःभाषापरिष्कारे चरित्रचित्रणे च शीघ्रमेव सिद्धिरवाप्यते किन्तु कथानकस्य सफलनिर्माणे तैरायासो विधीयते ।

अरस्तूकाले कथानकस्यमहत्वमासीत् । वस्तुपरके दृष्टि-कोणेऽमूर्तापेक्षया मूर्तस्याधिकं महत्वम् तथा चानुकरण सिद्धान्तस्योपलब्धिः चरित्रापेक्षया कथानकेन सहजा भवतीति हेतोः त्रासदी काव्ये कथानकस्य सर्वाधिकं महत्वम् वर्तते ।

समालोचना-

काव्यम् वस्तुतत्वप्रधाने सदपि वस्तु मात्र साध्यम् न भवति । यतो हि जगति ब्रह्माण्डे सौरमण्डले च विभिन्नाः महत्यो घटनाः जायन्ते परं मानवोपरि तासां क्रियान्प्रभावो-भवति ? केन्द्रस्थलं तु मानवस्य मनः, अत एव काव्ये कथानकापेक्षया रसस्य महत्वमधिकम् । एतदेव काव्यस्यात्म-तत्वम् । भारतीयकाव्यस्य मूलाधारत्वम् रसास्वाद एव ।

अरस्तोः कथनमेतदप्यसंगतम् यत् 'कथानकेन विना त्रासदीकाव्यमसम्भवम् चरित्रेण विना तत्सम्भवम्' यतोहि काव्येतत्व द्वयमेतदन्योन्याश्रितम् पात्रैर्विना कथानकः कथाकेन विना पात्राणि काव्ये किं करिष्यन्ति ? कथानकचरित्रचित्रण-योरुभयोरुपयोगः काव्ये रसाङ्गभूतव्यापारप्रणतया समुचितो भवति। भारतीय विचारकाणां दृष्टिः नास्ति वस्तुनिष्ठा। तेषां मते काव्यविश्लेषणमनुभूत्यात्मना भवति। अरस्तू सदृशा विचारकाः वस्तुपरकेण दृष्टिकोणेन काव्यं विवेचयन्ति। काव्ये कथानकः सत्यं महत्वपूर्णं पदं लभते परं चान्याङ्गानां पूर्ण-रूपेणावहेलनमपि नोचितम ।



# कामदी-Comedy

कामदी शब्दस्यार्थः सुखान्त इति । अस्योत्पत्तिः यूनानी 'कामस' शब्देन जाता यस्यार्थो हर्षोल्लासो भवति विद्वद्भिः 'कामदी' समुत्पत्तिविषये निगदितम्-यत्समाजे जायमानैरुत्सवैः सहास्य सम्बन्धो वर्तते। अरस्तूमते मौलिकगीतगायकैः सह कामदीकाव्यस्य सम्बन्धो वर्तते—

"Comedy originated with the leaders of Phallic Song. Which Survive to this day as many of Our States."

## कामदी लक्षणम्-

प्लेटो मते ईर्ष्याद्वेषजन्या भावनैव कामदी काव्यस्य मूलम । सौन्दर्यज्ञानधनाहंकारभावाः यदा मर्यादोल्लंघनं कुर्वन्ति तदा ते घृणिताः भवन्ति लोके ते—उपहास्यतां यान्ति । अस्यां भावनायां हर्षदुखयोर्मिश्रणं भवति। अरस्तूः कथवति यत् कस्यापि जनस्योपहासः निन्दनम् वा कामदीमूलम्, कामदी काव्ये निम्नवर्गस्यानुकरणं भवति ।

डा० नगेन्द्रेण निगदितम् यत् 'अरस्तू महाभागस्य काव्यशास्त्रभाषणशास्त्राधारेण' कथयितुं शक्यते यत् तेन

कामदीकाव्यस्य सम्यग् विवेचनं कृतम् तेन कामदीत्रासदी काव्ययोर्भेदः सर्वप्रथममुपन्यस्तः यथा—

For Comedy aims at representing men as worse. Tragedy as better than in actual life.

कामदी काव्यस्य लक्ष्यं यथार्थ जीवनापेक्षया हीन-जीवनचरित्रचित्रणं भवति त्रासदी काव्यस्य लक्ष्य तु भव्यतम-जीवनचित्रणं भवति ।

कामदीकाव्यस्य लक्ष्यमानन्दावाप्तिर्भवति, आनन्दोऽयम् हास्येन व्यंग्येन वोपलभ्यते । डा० नगेन्द्र मते येनकेनापि शारीरिकेण चारित्रिकेण वा विकारेण मानवमनसः मूलभावो हासः मांगलिकरूपेण यदोद्भूयते तदेव कामदीकाव्य-मित्युच्यते । विकाराः क्लेशप्रदा अमंगलकारिणश्च न भवितव्याः । अन्यथा प्रेक्षकाणां चेतसि विषादत्रासामंगलोदयः स्यात् ।

कामदी विषये विदुषां विभिन्नानि मतानि सन्ति-प्लेटो अरस्तू क्विंटीलियनादयः निम्नवर्गस्यानुकरणेन कामदीकाव्यम् हेयमिति मन्यन्ते । म्युजियो कथयति यत् 'कामदी कलाकारः हास्यं समाजोद्धारं च करोति । सर फिलियेन कामदीकाव्यस्य सुस्पष्टं लक्षणं कृतम्—'कामदीकाव्यस्योद्देश्यं हास्यं नास्ति यतो हि हास्येन तु जीवनस्यावगुणा एव प्रदर्शिताः भवन्ति ।

अस्माकं पारिवारिकवैयक्तिक दोषोद्घाटनमेव कामदीकाव्यस्य लक्ष्यम् आनन्दानेन सह शिक्षादानमपि कामदीलक्ष्यम् ।

हेनरो वर्गसां महाभागेन कथितम् यत्—'कामदीहास्यं मानवीयभावैः सह सुसंबद्धम् भवति, अस्य प्राणाधारः समाज एव कृत्रिमभावावस्थासंगतेर्हठधर्मस्यात्र न कोऽप्यवसरः अस्मिन् काव्ये भावोद्गारापेक्षया मानसिक विकासोऽधिको भवति । अत्र हास्यस्योद्देश्यमभिमानिनो मानमर्दनम्, संशोधनम तदुत्थानं च भवति । कामदी समाजविरोधो प्रचलतां जनाना-मुपहासं जनयति । अनेन सहजानन्दवाप्तिर्जायते ।

कामदीकथानकम्—

अरस्तू महाभागेन कामदीकाव्यस्य कथानके स्वविचाराः प्रकटिताः । तन्मते कथानकस्यादिमध्यावसानेषु पूर्वापरक्रमः पूर्णतैकान्वितिः कुतूहलं चावश्यकं वर्तते । कामदो काव्यं विकृतिमूलकं भवति अतो हि वस्तु संगठने दोषेषु सत्स्वपि कामदीकाव्यं सदोषं न भवति ।

पात्राणि—

कामदीकाव्ये भावचेष्टा कथोपकथनेषु निम्नस्तरीयदास-जनानुकरणमेवप्रधानं भवति अतोहि काव्येऽस्मिनकुरुपेणा सम्बद्धालापेन विकृतचेष्टया च तादृशाः नटादयः जनानुरंजनं विदधति ।

कामदीप्रभेदाः-

यद्यपि कामदी काव्यस्यैकमुद्देश्यं वर्तते यत हास्येन सामाजिको जन आनन्दमवाप्नुयात्। तदपि स्थूलरूपेण पँच प्रभेदाः सन्ति—

१. शास्त्रीय कामदी (*Classical Comedy*)

शास्त्रीयनियमे परम्परानुगतेनादर्शेन सीमाबद्धम् शास्त्रीयकामदीकाव्यम् भवति।

२. रूमानी कामदी (*Romantic Comedy*)

रूढ़िपरम्पराबन्धनमुच्छिद्य स्वातंत्र्येण कल्पनाप्रयोगे सति रूमानीकामदीकाव्यम्।

३. भावप्रधानकामदी (*Emotional Comedy*)

अस्मिन्प्रभेदे पात्रस्यासन्तुलितान्तर्वृत्तिर्हास्यात्मकेन व्यंग्यात्मकेन वा भावेन प्रकटिता भवति।

४. सामाजिककामदी (*Social Comedy*)

समाजस्याव्यवस्थामाडम्बर प्रियतामुपहस्य सामाजिकासन्तुलनस्य व्यंग्यात्मकं विवेचनं जायते।

५. समस्यामूलककामदी (*Problem Gomedy*)

यदा मनोवैज्ञानिकाधारेण परम्परागतकुरीतीना-

मुपहासो विधीयते, यदा च सामाजिक दुराचारादर्शसमस्यानां विरोधे सन्तोषो व्यज्यते ।

कामदीकाव्यस्य मुख्य तत्वत्रयम्–

(अ) विषयः-

अरस्तू सिसरो क्विटीलियनाः निम्नसमाजस्य जीवन-चित्रणमेव कामदीकाव्यविषयमङ्गीकुर्वन्ति । तन्मते निम्न वर्गस्य हीन चरित्रमेवास्य विषयः, एतद्विपरीतं शैक्सपीयर-कविना निर्गदितम् यत् श्रेष्ठजनाचरणमपि कामदोविषयः ।

यूनानी साहित्ये तात्कालीया दासप्रथाप्रतिबिम्बिता विलोक्यते समाजस्योच्चवर्गो हि निम्नवर्गस्योपहासं कामदी-माध्यमेन करोति स्म । आग्लविचारकाः वर्गभेदं विना साम्याधारेण कामदीकाव्यं रचयन्ति स्म । कामदो काव्यस्य विषयाधारो हि—सामाजिक्यो दुरवस्थाः, मानसिकासंगतयो विशेषरूपेणोल्लेखनायाः सन्ति ।

(आ) शैली-

कामदी काव्यं हि व्यंग्यात्मकम्, असंगतीनां चित्रणे सर्वाणि कार्याण्यनर्गलितानि भवन्ति अस्य रचना विषये लिखितम् 'कामदीरंगस्थले बालकैर्वृद्धारूपदिश्यन्ते नवयुवका

अवगुणानां पात्राणि भवन्ति। विदूषकेनानर्मलमुच्यते। अत्र स्मितहास्यस्य प्रशंसनम्, अपहसितस्य चावहेलनम्।

(ई) उद्देश्यम्-

कामदी काव्यस्यात्मतत्वं हास्यं वर्तते। केचन मन्यन्ते यत्प्रत्यक्षत आनन्दावाप्तिः, परोक्षतः समाजोत्थानमपि कामदी काव्यस्योद्देश्यम्। क्रियाणां—विरेचनेन भावाः साधारणीकृताः सहृदयैरास्वाद्यन्ते। एहकिन्सानुसारेण—विरेचनमेतत् ईर्ष्या क्रोधशोकभाववत् हास्यमपि साधारणीकरणेनानन्दमेव जनयति।

युगानुकूलप्रभावेनारस्तूः कामदीकाव्ये निम्नवर्गीय-जनस्य कार्यसंवादचारित्राणामनुकरणं करोति। विरेचनाधारेण हास्यं जनयत् मानव जीवनस्य कुरूपतां विनाशयत्काव्यमिदं साहित्यक्षेत्रे साधारणीकृतमाध्यमेन जनमनोरंजनं विदधाति।



# पाश्चात्य काव्य शास्त्रस्य वर्गीकरणम्

मानवीयभावानां सहज उच्छ्वास: काव्ये समवलोक्यते। भावनाभेदेन विचारभेदेन च काव्यस्यानेके प्रभेदा:। यथा कश्चित्कवि: घटनया, स्थित्या दृश्याधारेण च कमप्यनुभवमवाप्य काव्ये तमभिव्यंजयति। अभिव्यक्तिरपि विभिन्न रूपेण भवति। अभिव्यक्तेर्मुख्यत: त्रय: प्रभेदा:। तदाधारेण काव्यमपि त्रिविधम् – छन्दोबधस्य काव्यस्य वर्गीकरणमेमत्—

१. आत्मप्रधानं काव्यम् (Subjectivc Poetry )
२. विषय प्रधानं काव्यम् (Objective Poetry)
३. मिश्रितं-नाट्यकाव्यं-वा [Dramatic Poetry)

त्रिविधस्यापि काव्यस्य कवेरनुभूत्या सह घनिष्ठ: सम्बन्धो वर्तते। आत्मप्रधाने काव्ये कवि: स्वानुभूतिं धारणां च विभिन्नरूपेणाभिव्यंजयति। विषयप्रधाने काव्ये कवे: दृष्टिकोणं सामाजिकं भवति, कवेर्व्यक्तित्वं गौणं जायते। मिश्रितकाव्ये कवि: भावविषये समाजविषये च समन्वित रूपेण व्यवहरति। द्वयोरेव काव्यरूपयोर्मध्ये सामंजस्यं कुर्वन्नसौ मिश्रिते काव्ये नाट्यतत्वस्य समावेशं विदधाति।

१. आत्मप्रधानं काव्यम् -

आत्मप्रधाने काव्ये कविरन्तर्मुखो भवति। बाह्यजगत् विस्मृत्य स आन्तरिक-भावाभिव्यंजनं करोति। सर्वत्रैवात्रभाव बाहुल्यं भवति। आत्मलीनः कविः हृदयगतोद्गारान् व्यंजयति । अस्मिन्काव्ये निरलंकारा सरला प्रवाहपूर्णा संगीतमयी भाषा प्रयुज्यते। कविः स्वेच्छाः, निराशाः, अतृप्ताकांक्षाः, व्यथाः, मार्मिकैः शब्दैः वर्णयति। कविः स्वान्त-सुखाय भावुकतया स्वमनः-स्थितीनां विवेचनं विदधाति।

आत्मप्रधानकाव्यविषये 'हेनरी हडसनः' कथयति यत् 'अस्मिन्काव्ये कविरन्तर्मुखः स्वानुभवविचारानुभूतीनामाधारेण काव्यविषयस्य प्रेरणामनुगृह्णाति'। यथा—

"There is the poetry in which the poet goes down into himself and finds his inspirations and his Subjects in his own experiences, thoughts and feelings."

आत्मप्रधानकाव्यं हि गीतिकाव्यम्। अत्र मानवीय-वेदना अभिव्यक्ता भवति। मानवीयभावाधारेणगीतिकाव्य-स्यानेके प्रभेदाः यथा—

(क) स्तुतिगीतम्- *(Hymns Lyrics)*

गीतिकाव्यप्रभेदेषु स्तुतिगानस्य प्रमुखं स्थानम्। मानवो

येन केनापि भावेन प्रेरितः सन् परमात्मानं स्तौति। भयेन श्रद्धया कयापि कामनया वा परमेश्वरस्य स्तवने भावपूर्ण-गीतरचने प्रवृत्तो भवति।

### (ख) राष्ट्रिय गीतम् - (Patriotic Lyrics)

स्वदेशस्य राष्ट्रीयभावाः राष्ट्रीयगीतेषु व्यज्यन्ते। कविः स्वदेशं प्रति भावपूर्णां प्रेमाभिव्यक्तिं करोति।

### (ग) प्रणयगीतम् - (Love Lyrics)

प्रणयगीतेषु कविः व्यक्तिगत-प्रेमाभिव्यक्तिं करोति। शृंगारस्य संयोग-वियोगावुभावपि भेदौ प्रणयगीते समवलोक्येते।

### (घ) शोकगीतम् - (Elegy)

शोकगीते दुःखप्राधान्येन शोकस्य विभावो विराजते शोकगीतेनापि-परमानन्दोपलब्धिर्भवति। भारतीयकविना भवभूतिना कथितम् 'एको रसः करुण एवेति।

### (ङ) गौरवगीतम्- (Ode Lyrics)

पाश्चात्य काव्ये गौरवगीतस्य बहुप्रचलनं वर्तते। अस्य शैली प्रभावपूर्णा, ओजस्विनी- आह्लादप्रदा च भवति। अस्मिन् गीते भावनया सह कथापि प्रवर्तते। एतदेव संबोधन-गीतम्।

(च) हर्षगीतम्-

(Convirial or Bacchanolan Lyricc)

हर्षातिरेकेणाविर्भूताभिव्यक्तिः हर्षगीते विलोक्यते । विशेषपर्वणि समारोहे सदुत्सवे हर्षगीता निगीयन्ते ।

(छ) पत्रगातम् -

(Epistie Lyries)

पत्रशैलिमाध्यमेन भावपूर्णगानं पत्रगीते समवलोक्यते ।

(ज) व्यंग्यगीतम् -

(Satire Lyrics)

व्यंग्यगीते व्यंग्यस्य प्राधान्यं, व्यंग्यस्य मूलकारणं प्रेम भवति । आहतहृदयस्य मार्मिकाः भावाः व्यंग्यमाध्यमेनाभि-व्यज्यन्ते ।

२. **विषयप्रधानं काव्यम्--**

विषयप्रधानकाव्यस्य विस्तृत क्षेत्रम् । कविः वाता-वरणस्य चित्रणं करोति । अत्र भावाभिव्यक्तिः परोक्षत एव जायते । विषयचित्रणं मुख्यं कार्यम् । हेनरी महाभागेन आत्म-प्रधानविषयप्रधान काव्ययोर्भेद एवं प्रतिपादितः । 'आत्मप्रधानकाव्यमन्तः प्रेरणायाः काव्यम्, विषयप्रधानकाव्ये कविः स्वयं केन्द्रे न निवसति जीवनक्षेत्रे पदार्पणं कुर्वन्नसौ भावैः सह विषयवर्णनं तथा करोति यथा काव्ये स्वव्यक्तित्वस्य न्यूनातिन्यूनं मिश्रणं भवेत्' विषयप्रधानकाव्यस्यानेके प्रभेदाः । यथा —

(A) महाकाव्यम् (Epic)

काव्यस्य प्राचीनतम स्वरूपो महाकाव्यम् । पश्चिमे जगति 'इलियट' 'ओडेंसी' प्राचीनतमे महाकाव्ये, भारते तु ततोऽपि प्राचीनतमे रामायणमहाभारते द्वे महाकाव्ये । विषयशैलिमाध्यमेन महाकाव्यस्य द्वौ प्रभेदौ—

क—विकसनशील महाकाव्यम् (Epic growth)

ख—साहित्यिक महाकाव्यम् (Epic of Art)

विकसनशीले महाकाव्ये कवेरेकाधिकारो न भवति । समये-समये कवय आवश्यकतानुसारं तं सम्बर्धयन्ति । विकसनशीलमहाकाव्यस्य रचना परम्पराधारेण वंशानुक्रमेण जायते । प्रक्षेपयोजनेनास्य प्रामाणिकत्वं संदिग्धं भवति । साहित्यिकमहाकाव्यमेकेनैव कविना विरच्यते । अस्मिन्महाकाव्ये कथावस्तुनः प्रतिपादनमपि युक्तियुक्तं भवति । साहित्यिक महाकाव्यस्य चत्वारः प्रभेदाः यथा—

उपहासमहाकाव्यम् Mock Epic

प्रामाणिकनृत्यगीतम् Authentic Ballad

साहित्यिक नृत्यगीतम् Literary Ballad

उपहास नृत्यगीतम् Mock Ballad

(B) रूपककाव्यम्- (*Allegory*)

रूपके स्थूलाकारेण बाह्याकारेण च काव्यात्मकत्वं भवति किन्तु सूक्ष्मान्तरिकरूपेण प्रतीकार्थोऽपि समवलोक्यते । कविनाध्यात्मिकसामाजिको वा सन्देशः व्यंग्यात्मकेनोपदेशात्मकेन वा प्रकारेण दीयते ।

(C) दृष्टान्त काव्यम्- (*Parables*)

दृष्टान्तकाव्ये कविः पाठकेभ्यः उपदिशति उपदेशविषयाः प्रायः लोभप्रेममैत्रिस्वार्थादयः सामाजिकाः भवन्ति ।

(D) कल्पितकथा- (MYTH)

काव्येऽस्मिन् कल्पितकथानां बहुलता भवति । काव्यरचनैव कल्पनाधारेण जायते । कल्पनाधारेण शब्दविस्तारश्चमत्कारश्चोपलभ्यते । विभिन्नतत्वानामेषामाधारेण कथा भावपूर्णा तथ्यान्विता भवति ।

(E) प्रबोधककाव्यम् - (Deductive Poetry)

प्रबोधक काव्ये नैतिकाधारेणादर्शा उपदेशाश्च वर्णिताः विराजन्ते ।

(F) पत्रकाव्यम् -- (EPISTLES)

रोमीय नाटक कारस्य समालोचकहोरेसस्य च काले पत्रकाव्यस्य प्रचलनं जातम् । होरेस एवास्य जनकः । पत्रेषु

नैतिकादर्शा उपदेशाश्च भवन्ति ।

(G) ग्राम्यकाव्यम् - (Pastoral Poetry))

आरम्भकालेऽविकसितेन मानवेन स्वकीयाः भावाः विशृंखलितया गिरा संप्रकटिताः। तदानींतमं काव्यं ग्राम्य रूपेणोच्यते। अद्य तु ग्राम्यकाव्यमपि संस्कृतं परिस्कृतं च वर्तते। ग्राम्य काव्ये प्राकृतभावः ग्राम्यभाषेति च तत्वद्वयमाश्यकम्।

३. मिश्रितं नाट्यकाव्यम् - (Dramatic Poetry

मिश्रितं नाट्यकाव्यं द्वयोरेवात्मविषयप्रधानयोः काव्ययोर्मिश्रणेन जायते। नाटके क्वचिन्नाटककारस्य भावानां प्रतिनिधित्वं क्वचिच्चान्यसामान्यवस्तूनां विवेचनं समवलोक्यते। नाट्यकाव्ये पठनीयं काव्यं भवति नत्वभिनेयार्हम्।

अस्य त्रयः प्रभेदाः—

(अ) नाट्यगीतम् - (Dramatic Poetry)

हेनरी हडसनस्य मतमस्ति यत् नाट्यगीतिरियं भावाधारेण शैल्याधारेण चात्मप्रधाना भवति। अस्या विषयो हि कविनाव्यवहितरूपेण सम्बद्धो न भवति। कस्याप्यन्यस्य जनस्यानुभवाः स्थितयश्च कविनाभिव्यज्यन्ते।

नाट्यकथा- (Dramatic Story)

नाट्यकथायां संवादैःकथोपकथनैश्चकथायाः वर्णनं

विधीयते । संवादेन कथायां प्रवाहः—कुतूहलमाकर्षणं च जायते ।

नाट्य स्वकथनम् -

नाट्यस्वकथने नट आत्मन्येवाभाषते । नाट्यस्वकथनस्य विधा प्राचीननाटकेषु विद्यते । हेनरीमतानुसारेण कविर्नाट्ये स्वकथनम् तदाङ्गी करोति यदा सः अन्यसाधनेन भावाभिव्यंजनेऽसमर्थो भवेत् ।

एते काव्यप्रभेदाः विचारविषयात्मरूपमाध्यमेन निर्दशिताः ।

## पाश्चात्य काव्यस्य प्रयोजनम्

पाश्चात्य काव्याचार्यैः काव्यप्रयोजनविषये यथावसरं विभिन्नाः विचाराः प्रकटिताः । प्रारम्भकाले सर्वेषु कार्येषु विचारेषु च धर्माधारेण पर्यालोचनं विधीयते स्म । अतोहि समालोचकैः काव्यप्रयोजनमपि धर्मदृशा विलोकितम् । तेषां विचारे धर्मप्रचारः मानवसंस्कारो वा काव्यस्य प्रयोजनमासीत् । एते समाजवादिदृष्टिकोणेन काव्यं पश्यन्ति स्म । समये याते सति प्रतिक्रिया—रूपेणान्यैः विचारकैः काव्यक्षेत्राद् धर्मस्य नैतिकाचरणस्य च बहिष्कारः कृतः 'कलाकलायै' सिद्धान्तस्य प्रतिष्ठापनं कृतम् तदनन्तरं द्वयोरेव सिद्धान्तयोः समन्वयो जातः एवं काव्यप्रयोजनं सर्वदैव परिवर्तितम् जातम् ।

यूनानीसमीक्षकेण 'हैसियड' महाभागेन 'सदुपदेश' एव काव्यप्रयोजनं प्रतिपादितम् 'होमरः' आनन्दं काव्यप्रयोजनं मनुते । 'प्लेटो' लोककल्याणकरं काव्यप्रयोजनमङ्गी करोति, अनेन होमरस्य निन्दनं कृतम् यतो हि होमरः काव्यप्रयोजन-

मानन्दं स्वीकरोति स्म।

अत एव प्लेटोः काव्यालंकृतिमवहेल्य सत्यावन्वेषणे निरतः। काव्ये कविकर्तव्यमुपदिशन्नसौ कथयति यत् कविना नैतिकधारेण धर्मधारेण वा काव्यनिर्माणं कर्तव्यम्। भौतिकानन्दावाप्तिः नास्ति काव्यप्रयोजनम्। मानवचरित्रे सदाचारेणोदात्ततासम्पादनमेवकाव्यप्रयोजनम्।

अरस्तूः काव्यस्य द्वे प्रयोजने प्रतिपादयति—

१. ज्ञानोपलब्धिः २. आनन्दः। असौ कथयति यदानन्द एव काव्यस्य मूलप्रयोजनम् परं नैतिकसदाचारणमपि काव्येन जायते। तस्य मतम् 'कलाया विशिष्टोद्दश्यमानन्द एव परं चायमानन्दः नीतिसापेक्षो वर्तते। अयमनैतिको न भवति।

अरस्तू मते काव्यानन्दो हि बौद्धिकाध्यात्मिक मनोविनोदजन्यादानन्दात् भिन्नः प्रत्यभिज्ञानेनायं समुपलभ्यते।

'लोंजाइनसः' शिक्षादानमाह्लादावाप्ति तर्केण स्वमत स्थापनं वा काव्यप्रयोजनं नाङ्गीकरोति काव्य प्रयोजनं तु परमोल्लास एवास्ति—'For a work of genears does n0t aim at persuasion dut estary or lifting the readcr of htmself.

निओतालयेसेनहोरेसेन च समन्वयपूर्वकमुपयोगितामाह्लादं च द्वयमेव काव्यप्रयोजनमङ्गीकृतम्, होरेसेन निगदितम् यत् राष्ट्रे संस्कृतिसंरक्षणमनाचारनिवारणं कृत्वा वीरपुरुषेषूत्साहसंचारः श्रमक्लान्तजनेषु चानन्दोपलब्धिः सत्काव्येन विधीयते।

नव्यशास्त्रयुगेऽपि समन्वयात्मिकादृष्टिर्विलोक्यते। परन्तु रेनेवैलेकड्राइडनौ काव्ये नीतेः सदुपदेशस्य महत्वधिकं स्वीकुरुतः यथा—To teach delightfully is the function of poetry.

ड्राइडनेन काव्यप्रयोजनमानन्दं शिक्षादानं चोभयमेव समन्वितरूपेणाङ्गीकृतम् । असावपि अरस्तू इवानन्दस्य स्थानं मुख्यं शिक्षायाः स्थानं गौणमेव निर्धारयति यथा— To effect the soul and excite the passion and above all to move admlration.

शिलरः अष्टादशशतके काव्यं विचारयन्नानन्द पक्षपाती वर्तते । तस्यमतमस्ति-कलायाः लक्ष्यमानन्द एव, मानवस्य कृते आनन्दातिरिक्तं नास्ति किमप्युदात्ततत्वम् ।

कॉलरिजवर्ड्सवर्थ शैलिप्रभृतयः स्वच्छन्दवादिनः कवय आनन्द भूमिकायां काव्यं प्रतिष्ठापितवन्तः । तेषां काव्य प्रयोजनमानन्द एव ।

विक्टर काजिनः कथयति यद् नैनिकसौन्दर्याभिव्यक्तिः काव्यप्रयोजनम् । रोमान्टिक कविभिर्नैतिकतत्वं काव्यात् बहिष्कृत्य सौन्दर्योपलब्धेर्मूलमानन्द एवेति प्रतिपादितम् । शैली महाभागेन जीवनकाव्ययोर्घनिष्ठः सम्बन्धः प्रतिपादितः अत एव यस्मिन् काव्ये जीवनतथ्यं नोपपाद्यते नास्ति तत्काव्यम् ।

एकोनविंशशतके समालोचकैः स्वीकृतं यत् नीतिकलयोर्मध्ये नास्ति कोऽपि सम्बन्धः । लोकमंगलदृशाकाव्यसमीक्षणं निरर्थकम् 'कलाकलायै भवतीति' सिद्धान्तः समुद्घोषितः । आस्करवाइल्ड डा. ब्रेडले सदृशा अस्य सिद्धान्तस्य समर्थनम कुर्वन् । काव्यनिर्माणे कविः नैतिकं प्रचारात्मकं दृष्टिकोणं न स्वीकरोति । तस्य प्रतिभास्वच्छन्दा, नास्ति तस्यां कस्यापि प्रतिबन्धः । डा. ब्रेडले मतम्-'काव्यास्वाद एव काव्यलक्ष्यम् । स्वत एव तस्य मूल्यम्, जीवनमूल्यैः सह तस्य कः सम्बन्ध ?

संक्षेपेणपाश्चात्य काव्याचार्याणां मते त्रीणि काव्य-प्रयोजनानि ।

१. लोकशिक्षणम् -

प्राचीनाचार्याः नैतिक धार्मिकाधारेण काव्यं विवेचयन्ति स्म। लोकमँगलाय तदुद्धाराय लोक शिक्षणाय च काव्यस्योपयोगं कुर्वन्तः—प्लेटो रास्किन-टालस्टाय होरेसप्रभृतयः विचारका आसन्।

२. आनन्दः-

काव्यं प्रयोजनमानन्द एव स्वच्छन्दतावादिनः शिलर पेटरशैलिस्किन्गानादय केवलमागन्दमात्रमेव काव्यप्रयोजनमिति स्वीकुर्वन्ति नीतिकाव्ययोर्नास्ति कोऽपि सम्बन्धः।

३. आनन्दः लोकोद्धारश्च-

उभयमतवादिनः समीक्षकाः आनन्दं लोकमंगलं चोभयमेव काव्यप्रयोजनं स्वीकुर्वन्ति।

अस्य वर्गस्यापि द्वौ भेदो वर्तते-यथा—एकेनवर्गेणनीतिसापेक्ष आनन्दोऽङ्गीक्रियते आनन्दस्य समर्थनं कुर्वदभिरेतैर्नीतिरपिकाव्यप्रयानतत्वेन स्वीकृता। अस्मिन् वर्गे-अरस्तू ड्राइडन मैथ्यू आर्नाल्डादय सन्ति। अन्यो वर्गः काव्यप्रयोजने नीत्यपेक्षया आनन्दतत्वस्याधिकं महत्वमुपपादयति। अस्मिन्वर्गे लाँवोम्यू सदृशा विचारकाः सन्ति।

उक्त काव्यप्रयोजनानि परस्परमन्योन्याश्रितानि। तेषु नास्ति विरोधः। यतो हि काव्यस्यप्रयोजनं सौन्दर्यम् नैतिकता आनन्दोद्भावनम् च।

## पाश्चात्य काव्यहेतुः

यथा भारतीयकाव्यहेतुविषये विदुषां मतभेदस्तथैव पाश्चात्य काव्यस्य हेतुविषये मतभेदो वर्तते। प्लेटोमते-कविविक्षिप्तः प्राणी काव्यं च विक्षिप्तक्षणेषूच्चरितावाणी वर्तते।

कवेर्विक्षिप्तता सामान्यविक्षिप्ततायाः भिन्ना । अनेन सिद्धमेतत् यत् संसारे कविरसाधारणस्तस्य रचनाशक्तिरप्यसाधारणा भवति । सा शक्तिरेव प्रतिभा, स कलाकारे चिन्तन कलाशिल्प ज्ञानमत्यावश्यक मनुते । एवं हि तेन कलाकारे प्रतिभा चिन्तनाध्ययनाभ्यासा काव्यकारणरूपेण स्वीकृताः ।

अरस्तू मते प्रकृतेरनुकरणं कला । कलात्मकपुनःसृजनमेवानुकरणं । अतः कलाकारे चिन्तनप्रतिभाकल्पना अनिवार्या भवन्ति ! तन्मते प्रतिभाचिन्तन चमत्काराध्यनाभ्यासाः कवेरनिवार्याः गुणाः ।

अरस्तू मतानुयायिनः होरेसस्य मतमस्ति 'कुशलोऽनुकर्ता सत्याधारेण जीवनस्यनीतेश्चाध्ययनं विधाय सहजभाषयानुकरण विदधाति । होरेसः नियोतालमेसेन प्रभावित आसीत् । नियोतालमेससः प्रतिभाशास्त्रज्ञानयोर्महत्वं प्रतिपादयति । अतः होरेसेनापिकाव्ये हेतुद्वय स्वीकृतम्, Invention शब्देन नवीनोद्भावना काव्ये स्वीकृता । प्रतिभयैव नवीनोद्भावना संभाव्या । यद्यपि तेन प्रतिभाशब्दस्योपयोगः न कृतः परन्तु नवीनोद्भावनाविष्कार Invention अन्तर्दृष्टि शब्दैः प्रतिभार्थस्य ध्वननं स्वत एव जायते । प्रतिभाशास्त्रज्ञानयोः समन्वयं विदधन्नसौ कथयति— यत्—

"For my Part, I fail to see the use of study without wit or of wit without training. So true is it that each repuires the others aid in helpful union."

एवं होरेसमते प्रतिभाशास्त्र ज्ञानविवेकचिन्तनानि काव्यकारणानि ।

लौंजाइनसः काव्यहेतुत्वेन प्रतिभाभ्यासौ स्वीकरोति तेनोदात्ततत्व विवेचने पँचोपायाः प्रतिपादिता यथा—महती धारणाक्षमत्वम्, विषयगाम्भीर्यम्, समुचितालँकारयोजनम्,

भावावेशानां तीव्रता, गरिमामय काव्यरचना च । एषु-धारणाया: सम्बन्धः प्रतिभया सह वर्तते। भाषालँकार गरिमामय रचनाविधानानां सम्बन्धोऽभ्यासेनाध्ययनेन सह वर्तते । अतः लौंजाइनसोऽपि परोक्षतः काव्यकारणेषु प्रतिभा-ध्ययनाभ्यासानां महत्वं स्वीकरोति ।

नव्यशास्त्रवादयुगे काव्यस्य सम्बन्धः कलया सहासीत् तस्मिन्युगे काव्यस्यकृते शास्त्रीयनियमानुपालनं नीतिसदुपदेशेन च ज्ञानविवर्धनं द्वयमेव मुख्यलक्ष्यमासीत् । कविः प्राचीनग्रन्थ-ज्ञानेन परिपूर्ण सन् शास्त्रीयनियम परिपालने नातिज्ञाने च निष्णातो भवेत् । तादृशाः विचारकाः काव्यकारणमध्ये प्रतिभां प्रेरणां नावश्यकीं मानयन्तो पि काव्यनियमानुपालनं काव्यस्य परं हेतुत्वमङ्गीकुर्वन्ति स्मः । तेषां मते स एव कवि महत्काव्यं कर्तुं क्षमः यस्यज्ञानभंडारोऽसीमः यश्च काव्यकला निष्णातो भवेत् ।

अतः नव्यशास्त्रवाद समीक्षायां प्रतिभापेक्षया शास्त्रा-भ्यासायोर्महत्वमधिकम् ।

डा. जानसनमहाभागः नवशास्त्रवाद परायणोऽपि तस्यान्धानुकरणं न करोति स काव्यकारणेषुनियमानुसरणा-पेक्षया प्रतिभा महत्वमधिकं स्वीकरोति । तेन प्रतिभामूल-तत्वानि-मौलिकाविष्कारशक्तिकल्पना सद्विवेकादीनि काव्ये कारणानि स्वीकृतानि । डा. जानसस्य नव्यशास्त्रवादिभ्यो-भिन्नमतमे तद् यद् नियमपालनादधिकं महत्वं प्रतिभायाः ।

रोमांटिक काव्यधाराप्रवर्तकेन वर्ड्सवर्थेन काव्यविषये लिखितम्—

It takes its origin from emotions recollected in tranquilty.

मननं चिन्तनं भावानुभावितं च काव्यकारस्य महत्वं विवर्धयन्ति यथा—

If the funcsion of a deuout heart be wanting everything else in of no avail,

वर्ड् सवर्थस्य दृष्टिकोणे प्रतिभाकल्पना भावना सत्य-चिन्तनमननाध्ययनानिकाव्यकारणानि ।

कालरिजमते कविः पूर्णं प्रतिभान्वितो भवेत् प्रतिभा-काव्यत्वंचाभिन्नं तत्वम् । अस्य विचारे कवेरावश्यकाः गुणाः-भावुकता-विवेककल्पनादयो भवन्ति । कविः दार्शनिकस्तत्व-वेत्ता भवेत् । ऐतिह्यज्ञानं प्रकृतिज्ञानं चापि कलाकारस्य महत्वाधायकं तत्वम् कविः नैरपेक्षभावेन लोकमवलोकयेत् । यथा—

"To have a genius is to live in the universal, to know him saif but that which is reflected not only from the flowers, the trees, the beasts, yea from the very surface of ehe waters and sands of the desert."

वक्तव्येनानेन प्रतीयते यत् कालरिजः प्रतिभासहृदत्व-विवेकाध्ययनानि काव्यकारणानि स्वीकरोति ।

आंग्लकविः शैले महोदयस्य काव्यहेतु विषये वक्तव्यं विलोकनीयं वर्तते । कविर्नास्ति केवलं चित्रनिर्माता । स चरित्रप्रतिष्ठापकः, समाजस्य जन्मदाता, जीवन कलायाः आविष्कारकः, धर्मप्रबोधक,, सत्यंशिवं सुन्दरमिति तत्वस्य मार्गदर्शको गुरुर्वर्तते । अनेनोद्धरणन प्रतीयते यत् शैले प्रति-भाचिन्तनमननाभ्यासाध्ययनानि काव्यस्य कारणानि मनुते ।

हीगेलमते—काव्यप्रेरणायाः मूलं सौन्दर्यमास्ते । सौन्दर्यानुभूतिक्षणेऽस्माकमात्मानि आनन्दस्य श्रोतः—समुद्-

भूयते तस्योच्छलनेन काव्याविर्भावोजायते । सौन्दर्येणाकर्षितः सहृदयः तस्मिन्नेवानन्दे निमज्जति । यदा वाक् तमानन्दं व्यजयति तदैव काव्यमुद्भवति अतः कवितायाः प्रेरणातत्वं सौन्दर्याकर्षणमेव । क्रोचे काव्यनिर्माणस्य परं कारणमात्माभिव्यक्तिं स्वीकरोति । मानवमनसि जगतः पदार्थानां नानाछायाचित्राणि परिभ्रमन्ति तेषामरूपचित्राणां झंकृतमः साकाररूपेण परिणमिता काव्यपदं लभन्ते ।

फ्राइडमते काव्यस्य कारणमभुक्तः काम एव । अतृप्ताकामवासना स्वप्नमाध्यमेन काव्यमाध्यमेन वाभिव्यक्ता भवति । अत एव फ्रायडमते – कामवासनापरितृप्तिहेतोः काव्योत्पत्तिर्जायते । एडलर मते—जीवनगताभावपूर्तये काव्यनिर्माणं विधीयते ।

काव्यहेतु सम्बन्धे विचाराणां समन्वये सति प्रकारैःत्रये समेषां कारणानां समावेशोभवितु शक्यते यथा—

१. प्रेरकहेतुः

सामाजिक पारिवारिक वैयक्तिक परिस्थितयः ।

२. निमित्तहेतु--

कल्पनादार्शनिकचिन्तनसौन्दर्यानुभूति संवेदनाभिव्यक्ति मध्ये विद्यमानं प्रतिभात्वम् ।



३. उपादानहेतुः-

लोकशास्त्र ज्ञानम्, सत्संगमनाभ्यासाः ।

पूर्वोक्तं समस्त काव्यकारणानामुल्लेखः वाग्देवतावतारेण भारतीय काव्यतत्वमर्मज्ञेन श्रीमता मम्मट भट्टेन स्वकीये 'काव्यप्रकाशे' एवंकृतः—

शक्तिर्निपुणता तत्र लोकशास्त्राद्यवेक्षणात् ।
काव्यज्ञशिक्षयाभ्यासः इति हेतुस्तदुद्भवे ।।

# शुभाशंसनम्

पण्डितप्रवराणां हरिद्वारस्थ जयभारत - साधु - महाविद्यालयीय — साहित्यविभागाध्यक्षपदमलङ्कुर्वाणानां श्री ज्ञानचन्द्रशास्त्रिणां प्रयत्न-कुसुमायितस्य पाश्चात्य काव्य शास्त्रस्यावलोकनेन मोमुदीति चेतः । अत्र लेखकमहोदयैः प्रसन्नगम्भीरगिरा इतस्ततो विशृङ्खलितपदार्थानां शोभनं संगठनं विधाय 'नावश्यंत्यज्यते किञ्चिन्नानपेक्षितमुच्यते' इति सरण्या संक्षेपेण सारेण रत्नावली निर्मिता । संस्कृतसाहित्ये एवं विधः प्रयासः सर्वथानुकरणीयः श्लाध्यश्च ।

अत्र काव्यशास्त्रिणां परिचयाः, विचाराः वादाश्च वर्णिता विराजन्ते । ईदृशोग्रन्थो हिन्द्याङ्ग्लाद्याधुनिकभाषायामपि सुगमो न वर्तते, संस्कृतभाषायां तु का कथा ?

संस्कृतविश्वविद्यालयच्छात्राणामन्येषां विश्वविद्यालयान्तेवासिनाञ्चानेन महानुपकारः स्यादिति निश्चप्रचम । आशासे यदनेन संस्कृतभाषानुरागिणां हितसाधनेन सह नवीनग्रन्थप्रणयने योगोऽपि स्यात ।

विदुषामनुचरः
देवनारायण त्रिपाठी
व्याकरण विभागाध्यक्षः
जयभारत साधु महाविद्यालय-
हरिद्वारम्

११.४.६२